ISSN :- 0974 - 8946

अनुसन्धान-प्रकाशन-विभागीया

**त्रैमासिकी शोध-पत्रिका**

# शोध-प्रभा

**(A REFEREED QUARTERLY RESEARCH JOURNAL)**

**३९ वर्षे तृतीयोऽङ्कः ( जुलाईमासाङ्कः ) २०१४ ई०**

प्रधानसम्पादकः प्रभारी कुलपतिश्च

**श्रीसुखवीरसिंहसन्धू** (आई. ए. एस.)

संयुक्तसचिवः

(भाषा-उच्चशिक्षाविभागः)

मानवसंसाधनविकासमन्त्रालयः, भारतसर्वकारः

सम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**




प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली-११००१६**

प्रकाशकः
**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**
(मानित-विश्वविद्यालयः)
कुतुब इन्स्टीट्यूशनल एरिया,
नवदेहली-११००१६



ISSN :- 0974 - 8946

३९ वर्षे तृतीयोऽङ्कः (जुलाईमासाङ्कः) २०१४ ई०



मुद्रकः
**अमरप्रिंटिंगप्रैसः**
दिल्ली
amarprintingpress@gmail.com

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

१. एषा त्रैमासिकी शोध-पत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।

४. अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।

५. अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।

६. प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

७. अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते।

८. अस्याः वार्षिकसदस्यताराशिः १५०.०० रु० (पञ्चाशदुत्तरैकशतं रूप्यकाणि) सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्री-राष्ट्रिय-संस्कृत-विद्यापीठ,** नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।

९. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

## सम्पादकीयम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य शोधप्रभाख्या शोधपत्रिका विविधविषयगवेषणपूर्णानां निबन्धानां संग्रहं क्रोडीकृत्य विद्योततेतराम्। अनुसन्धानसरणिसम्पन्नानामाचार्याणां शोधार्थिनाञ्च शोधपूर्ण-निबन्धान् कलेवरीकृत्य संस्कृतवाङ्मयपरिपोषणे निमग्नेयम् आनन्दसागरे निमज्जयति विदुषो नितान्तम्।

विश्वभाषाप्राणप्रदायिनी भारतीयविद्यास्रोतस्विनी मानवजीवनसुधावर्षिणी देववाणी या खलु सम्पूर्णेऽस्मिन् विश्वे कौटुम्बिकं भावं विदधती सुदीर्घकालात् विराजतेतराम्। भारतीयवाङ्मयस्याधारभूतायाः तस्याः संस्कृतभाषायाः अध्ययनं साधु न वेति विषयमधिकृत्य विवदन्ते केचन। मूलाधारत्वेन सुप्रतिष्ठतायाः भाषायाः अध्ययनं संशयास्पदं विधातुं प्रयत्नशीलाः दृश्यन्ते भारतीयसंस्कृतिसंस्कार-विमुखाः संस्कृतभाषाविशेषानभिज्ञाः। जर्मनभाषायाः भारतदेशे प्रचारप्रचाराय वद्धपरिकराः यदि जर्मनदेशाधिकारिणः प्रयत्नशीलाः तर्हि नास्ति किमपि विस्मयावहम्, किन्तु तत्पक्षानुपातिनः ते भारतीयाः ये भारतस्य हितं न चिन्तयन्ति न वा जर्मनभाषायाः हितं साधयन्ति, ते स्वार्थसाधनतत्पराः न भारतस्य गौरवं चिन्तयन्ति न वा भारतीयां संस्कृतिं परिगणयन्ति।

आधुनिकसमाजे विद्यमानस्य अनैतिकसंस्कारस्य मूलोच्छेदनाय महार्षिभिः प्रवर्तितायाः जीवनपद्धतेः प्रचारप्रसाराय महती आवश्यकता विद्यते। तेषां जीवनसूत्राणमनुशीलनमादाय चिन्तनेन जीवनं सुखमयं भवितुमर्हति। भगवद्गीतायामुक्तमस्ति यत्-

**यः शास्त्रविधिमुत्सृज्य विद्यते कामकारतः।**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम्॥**

अतः शास्त्रविधिना कार्यसम्पादनाय प्रथमं शास्त्रज्ञानमपेक्षते ततः कार्यसम्पादनम्। अस्माकं शास्त्राणि मूलतः संस्कृतभाषायामेव सन्ति। संस्कृतस्य सम्यग् ज्ञानं तत्र च निहितं तत्त्वं सर्वैः अवश्यमेवानुशीलनीयमस्ति। अस्यामेव दिशि विद्यापीठस्यास्याः 'शोध-प्रभा'-शोधपत्रिकायाः प्रकाशनं विधीयते।

शोधप्रभायाः अस्मिन्नङ्के विविधविषयविश्लेषपरा द्वादश लेखाः प्रकाश्यन्ते। एवं प्रतिभा-विशेषोद्भासितशोधपूर्णा संस्कृतसौरभं वितन्वतीयं विदुषां सन्तोषाय भविष्यतीति कामयमानोहं प्रमादादज्ञानाद्वा सञ्जातस्य दोषजातस्य प्रशमनार्थं निर्देशादिप्रदानैश्च उत्साहश्रियः संवर्धनार्थमभ्यर्थये सुमनसः विदुषः।

**प्रो. रमेशकुमारपाण्डेयः**

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

# लेखकसूची

1. **डॉ. सुन्दरनारायणझा:,** सहायकाचार्य:-वेदविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली-16

2. **डॉ. आमोदवर्धनकौण्डिन्यायन:,** सहप्राध्यापक: वेदविभागे नेपाल संस्कृतविश्वविद्यालय:, नेपाल:

3. **श्रीयीशनारायणद्विवेदी,** शोधच्छात्र:- विशिष्टसंस्कृताध्ययनकेन्द्रम्, जवाहरलालनेहरुविश्वविद्यालय:, नवदेहली-67

4. **श्रीरमेशकुमारमिश्र:,** शोधच्छात्र:- साहित्यविभागे, श्रीकामेश्वरसिंहदरभंगा-संस्कृतविश्वविद्यालय:, दरभंगा, बिहार:

5. **श्रीरविन्द्रकुमारबरमोला,** शोधच्छात्र:- ज्योतिषविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठम्, नवदेहली-16

6. **प्रो. मनोज कुमार मिश्र,** आचार्य- वेदविभाग, राष्ट्रियसंस्कृतसंस्थानम्, श्रीरणबीरपरिसर:, जम्मू

7. **डॉ. कमलेश रानी,** सहायकाचार्या- संस्कृतविभाग, कमलानेहरुमहाविद्यालय, अगस्तक्रान्तिमार्ग, खेलगाँव, नई दिल्ली-49

8. **प्रो. रमेश कुमार पाण्डेय,** शोध-प्रकाशनविभागाध्यक्ष, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, नई दिल्ली-16

9. **प्रो. केदार प्रसाद परोहा,** विशिष्टाद्वैतविभागाध्यक्ष, श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, नई दिल्ली-16

10. **डॉ. सन्तोष कुमार शुक्ल,** सहाचार्य, विशिष्ट संस्कृत अध्ययन केन्द्र, जवाहर लाल नेहरु विश्वविद्यालय, नई दिल्ली-67

    एवम्

    **ठाकुर शिवलोचन शाण्डिल्य,** शोधच्छात्र, विशिष्ट संस्कृत अध्ययन केन्द्र, जवाहर लाल नेहरु विश्वविद्यालय, नई दिल्ली-67

11. **डॉ. सुभाष चन्द्र मिश्र,** सहायकाचार्य- ज्योतिषविभाग, राष्ट्रियसंस्कृतसंस्थान, के.जी.सौमय्यापरिसर, मुम्बई

12. **Dr. Yuthika Mishra**, Associate Prof. Vivekanand College, Vivek Vihar, New Delhi-95

# वैदिकं शिल्पविज्ञानम्

**डॉ० सुन्दरनारायणझाः**

समस्तस्यापि विश्ववाङ्मयस्य उत्सो वेद इति सर्वैरपि विद्वद्भिः सहर्षं स्वीक्रियते। वेदेषु विश्वस्य समस्तान्यपि ज्ञानानि विद्यमानानि सन्तीत्यत्र नास्ति कस्यचिल्लेशतोऽपि संदेहस्यावसरः। अत एवोक्तं वेदानां विषये भगवता मनुना- **सर्वज्ञानमयो हि स**[1] इति। अर्थाद्वेदेषु सर्वविधज्ञानविज्ञानविषयाः सन्ति विवेचिताः। तेषु वैज्ञानिकविषयेषु शिल्पविज्ञानस्यापि महत्त्वपूर्णं स्थानमस्ती'ति सर्वैरङ्गीक्रियते।

## शिल्पशब्दार्थः–

सामान्यपरिभाषायां प्रौद्योगिकीशब्दस्यार्थः शिल्पविज्ञानं कलाविज्ञानं वेति भवति। आङ्ग्लभाषायां **टेक्नोलॉजी ( Technology )** शब्दः प्रयुक्तः। शब्दोऽयं ग्रीकभाषायाः **तकने (Techne)** शब्दात् **तकनीकोज (Technikos)** शब्दाच्च विनिर्मितः। अस्य लैटिनस्वरूपमस्ति **टेकसयर ( Texere)** इति, यस्य सर्जनम्, निर्माणम्, उत्पादनम्, ग्रन्थनम्, सज्जीकरणमित्यादयोऽनेके अर्था भवन्ति। वस्तुतः कस्यापि विशिष्टकार्यस्य व्यावहारिकी निपुणतैव प्रौद्योगिकी'त्युच्यते। तादृशी निपुणता, क्षमता, सिद्धता, दक्षता तादृशं ज्ञानं वा यस्मिन् पुरुषे विद्यमानमस्ति स एव प्रौद्योगिकीविद् इति कथ्यते। आंग्लभाषायां आक्सफोर्डशब्दकोशे प्रौद्योगिकीशब्दार्थो यथा- **A particular way of doing something. तथा च- The practical skill that somebody has in a particular activity.** प्रौद्योगिकीज्ञस्य परिभाषा यथा- **He is a naturally talented runner, but he needs to work on his technique.** तात्पर्यमिदमस्ति यदुद्योगस्य विज्ञानस्य वा क्षेत्रे व्यावहारिकैः कौशलैः सम्पन्नो जनः प्रौद्योगिकीज्ञ इत्युच्यते। आंग्ल-हिन्दीशब्दकोशकारेण भार्गवेणापि स्वीये शब्दकोशे टेकनिकशब्दस्यार्थमित्थं प्रस्तुतम्- **Skill of an art of Craft इति**। अर्थात् शिल्पसम्बन्धिनी कला प्रौद्योगिकी'त्युच्यते। तादृशं ज्ञानं यस्मिन् शास्त्रे वर्णितं तच्छास्त्रं टेक्नोलॉजी'ति कथ्यते। टेक्नोलॉजीशब्दस्यार्थं कुर्वता भार्गवेणोक्तम्- **Science of industrial art.** इति। अर्थात् औद्योगिककलाविज्ञानम् टेक्नोलॉजी कथ्यते। औद्योगिककलाविज्ञानस्य पर्यायोऽस्ति शिल्पविज्ञानमिति। एतादृशानां प्रौद्योगिककौशलसम्पन्नानां जनानां कृते वेदेषु तक्षन्, तक्षा, तक्षक, शिल्पी, शिल्पकार इत्यादयोऽनेके शब्दाः प्रयुक्ताः सन्ति। तक्षा भवति कुशलो वस्तुनिर्माता। एतेनेदं स्फुटं यच्छिल्पकारा एव प्रौद्योगिकीज्ञत्वेन वैदिकवाङ्मये स्तुताः। प्रतीयते यद्वैदिककाले प्रयुज्यमानस्तक्षन् शब्द एव कालान्तरे परिणतो भूत्वा टेक्निशियन् इति पदेन व्यवहृतोऽभवत्। यद्यपि सर्वासां भाषाणां जननीत्वेन संस्कृतभाषा पूजिता खलु। संस्कृतभाषायाश्चादिग्रन्थोऽयं वेद इति

---

1. मनुस्मृतौ- 2/7

नास्त्यत्र कस्यचिद्विप्रतिपत्तिः। अतो वैदिकशब्दादेवास्य टेक्निशियन् इति पदस्य निर्मितिरभवदिति कथनं समीचीनमेव।

स च तक्षन् विशिष्टेन ज्ञानेन सम्पन्नो भवति। यथोक्तमृग्वेदे- **तक्षन् रथं सुवृतं विद्मनापसः**[1] इति। अर्थाद्विविधं विचारपूर्वकं कर्मकुशला ऋभवः सुन्दरं रथं निर्मितवन्तः। **दक्षास ऋभवः**[2] ऋभवो निपुणाः शिल्पकाराः सन्ति। **त्वष्टा तक्षद् वज्रं स्वपस्तमं स्वर्यं रणाय**[3] शिल्पकारेषु सर्वश्रेष्ठः त्वष्टृनामकः शिल्पी युद्धार्थमिन्द्रायातितीव्रं तेजोमयं वज्रं चकार। शुक्लयजुर्वेदस्यैकस्मिन् मन्त्रे **शिल्पो वैश्वदेव**[4] इत्युक्तं यच्छिल्पः सर्वदेवसम्बद्धो वर्तते।

**विज्ञानपदार्थः—**

अमरकोषे- **मोक्षे धीर्ज्ञानमन्यत्र विज्ञानं शिल्पशास्त्रयो**[5] रित्युक्त्या शिल्पशास्त्रादिकं विज्ञानशब्दार्थतया परिगृहीतम्। गीतायाम्- **ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः।**[6] इत्यत्र भाष्यकारैः श्रीशङ्कराचार्यपादैः सविज्ञानमिति पदस्य **विज्ञानसहितम्- स्वानुभवसंयुक्तम्** इति शब्दार्थः प्रदर्शितः। आधुनिकास्तु विद्वांसः पाश्चात्त्यभाषायाः साइन्सपदसमानार्थकं विज्ञानपदं प्रयुञ्जते। तत्किमेवं विज्ञानपदमनेकार्थकमेव, उतास्ति काचिदेका सर्वानुगता परिभाषा इति विचारयद्भिर्मधुसूदनओझासरस्वतीभिरेवं निर्णीतं यद्- **विभिन्नं वस्तुजातमक्षिलक्ष्यीकृत्य मूलान्वेषणक्रमेणैकतत्त्वपर्यन्तं गतिर्ज्ञानम्। एकं तत्त्वं निरूढं मत्वा क्रमेण तस्यानन्तरूपताप्रतिपत्तिर्विज्ञानम्। विशिष्य ज्ञानं हि विज्ञानम्, विविधं ज्ञानम्, विभेदेन ज्ञानं वा विज्ञानमिति।**[7]

वस्तुतः पाश्चात्यानां साइन्सपदवाच्यं पदार्थज्ञानमेव वयं वैदिकवाङ्मये प्राधान्येनोपलभामहे। वैदिकं सर्वमपि ज्ञानम्- आत्मविज्ञानम्, ब्रह्मविज्ञानम्, धर्मविज्ञानमिति विज्ञानशब्देनैवोपदेष्टुमर्हम्। अत एव कर्मविधिपरेषु ब्राह्मणेषु प्रतिविधिः **किमर्थमेतत् करोति** इति जिज्ञासामुत्थाप्य वस्तुतत्त्वावलम्बेन तत्समाधानं तत्र-तत्र पश्यामः। तेन च वस्तुशक्तिमवलम्ब्यैव वस्तुविज्ञानाधारोऽस्माकं धर्मोऽपीति सुस्पष्टं भवति।

कूर्मपुराणे ज्ञानविज्ञानयोर्विषये एवमुक्तम्-

**यया स देवो भगवान् विद्यया वेद्यते परः।**
**साक्षाद्देवो महादेशस्तज्ज्ञानमिति कौशलम्॥**

**चतुर्दशानां विद्यानां धारणं हि यथार्थतः।**
**विज्ञानमिति तद्विद्याद्येन धर्मो विवर्द्धते॥**[8]

1. ऋग्वेदे-1/111/1
2. ऋग्वेदे- 1/51/2
3. ऋग्वेदे- 1/61/6
4. यजुर्वेदे- 24/58
5. अमरकोषे धीवर्गे-श्लोक-6
6. श्रीमद्भगवद्गीतायाम्- 7/2
7. महर्षिकुलवैभवम्- उपोद्घाते पृष्ठ सं-3
8. कूर्मपुराणे- उत्तरखण्डे-15 तमे अध्याये

तात्पर्यमिदमस्ति यदेकस्मादनेकस्मिन्नवतरणं विज्ञानं यज्ञविद्या। अनेकस्मादेकस्मिन्नारोहणं ज्ञानं ब्रह्मविद्या। ब्रह्मविद्यातिरिक्ताः सर्वा अपि विद्या अनेकत्वप्राधान्याद् यज्ञविद्यायामर्थाद् विज्ञान एवान्तर्भवन्ति। आभ्यामेव ज्ञानविज्ञानाभ्यां मानवस्य कृतकृत्यता सम्पद्यते। तत्र विज्ञानमभ्युदयहेतुः, ज्ञानं तु निःश्रेयसजनकम्। इदमेव ज्ञानविज्ञानयुगलं मानवस्य मुख्यो धर्मः। धर्मजिज्ञासायामुक्तं लौगाक्षिभास्करेणार्थसङ्ग्रहे- **यागादिरेव धर्म**[1] इति।

वस्तुतो वैदिकवाङ्मये यज्ञमाधारीकृत्यैव विविधज्ञानविज्ञानानि प्रतिपादितानि सन्ति। तस्माद्यज्ञस्य वैज्ञानिकत्वं स्वत एव स्फुटं भवति। अत एवोक्तं शतपथश्रुतौ- **यज्ञो वै श्रेष्ठतमं कर्म**[2] इति। अर्थाज्जगत्यस्मिन्ननेकविधकर्माणि यथा- नित्यकर्म-नैमित्तिककर्म-काम्यकर्म-निषिद्धकर्म-धार्मिककर्म-आत्मीयकर्म-अधिकृतकर्म-सत्कर्म-विकर्म-अकर्म-निष्कामकर्म-प्रवृत्तिकर्म-निवृत्तिकर्म-प्रसिद्धकर्म-विरुद्धसहजादीनि च कर्माण्युक्तानि। तेषु सर्वेष्वपि कर्मसु यज्ञानुष्ठानरूपं कर्म श्रेष्ठतममुक्तम्।

यज्ञानुष्ठानमिदं पूर्णरूपेण प्रौद्योगिकीविज्ञानमेवास्ति। अत्र सर्वविधकलाकाराणां सम्यगुपयोगो दृश्यते। उक्तमपि तैत्तिरीयेण- **विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च।**[3] यज्ञस्तु कर्मणैव सम्पद्यते, तस्माद्यज्ञस्यापरं नाम कर्मकाण्डमिति प्रसिद्धम्। कर्मकाण्डं कर्तुं कर्मनिष्ठकर्तुः, उपयुक्तस्थानस्य, उचितस्य कालस्य, अपेक्षितसामग्रीणां चावश्यकता भवति। कर्मकर्ता यजमानः ऋत्विजश्च वैज्ञानिका आसन्, ते यस्मिन् स्थाने यागानुष्ठानं कुर्वन्ति स्म तत्स्थानं यज्ञशालेत्युच्यते। तदानीन्तना वैज्ञानिका यज्ञशालायामेव स्वीयं वैज्ञानिकप्रयोगरूपमनुष्ठानमनुतिष्ठन्ति स्म। अत इदं सुस्पष्टमेव यत्तेषां यज्ञशाला साम्प्रतिकी प्रयोगशालैवासीत्। तस्यां प्रयोगशालायां यावज्जीवं स्थितास्ते विविधप्रौद्योगिकीविषयाणाम् इष्टि-पशु-सोमादीनां विविधानां यज्ञानां प्रयोगरूपमनुष्ठानमनेकविधद्रव्याणां साहाय्येनानुकूलमुहुर्त-दिन-पक्ष-मासर्त्वनुसारं कुशलतया सम्पादयन्ति स्म। तेषु कर्मकाण्डेषु येषां द्रव्याणामुपयोगस्तैः क्रियते स्म तेषां द्रव्याणां निर्माणमपि त एव स्वीयेन प्रौद्योगिकीज्ञानेन कुर्वन्ति स्म कारयन्ति च स्म। तस्मादेव कारणाद् वैदिकवाङ्मये शिल्पविज्ञानान्तर्गतं विविधशस्त्रास्त्राणाम्, वास्तुविद्यानाम्, विमाननिर्माणविधीनाम्, गृहोद्योग-लघूद्योग-कुटीरोद्योगादीनामन्येषाञ्च यन्त्राद्युपयोगेन विविधशिल्पकलानां विस्तृतं विवेचनमस्ती'ति दृढं वच्मि। लघुनिबन्धेऽस्मिन् सर्वेषामपि विषयाणां विस्तृतं विवेचनं नैव शक्यते कर्तुम्। तथापि नामोल्लेखद्वारा दिङ्मात्रनिदर्शनमिह प्रस्तूयते।

### शिल्पविज्ञानस्य महत्त्वम्-

शिल्पविज्ञानस्य सर्ववेदसम्बद्धत्वादतिमहत्त्वपूर्णं स्थानमस्तीति सर्वैरङ्गीक्रियते। तदुक्तमपि गोपथब्राह्मणे- **आत्मसंस्कृतिर्वै शिल्पानि आत्मानमेवास्य तत्संस्कुर्वन्ति।**[4] अर्थाद्येन विज्ञानेन आत्मनः

---

1. अर्थसंग्रहे- धर्मलक्षणप्रकरणे
2. शतपथब्राह्मणे- 1/7/1/5
3. तैत्तिरीयोपनिषदि- 2/5/1, तैत्तिरीयारण्यके- 8/5/1
4. गोपथब्राह्मणे- 2/6/7

संस्कारो विधीयते तच्छिल्पमित्युच्यते। शतपथब्राह्मणे तु- **यद्वै प्रतिरूपं तच्छिल्पम्**[1] इत्युक्तम्। काठकेऽपि- **शिल्पैर्हि सर्वं कुर्वन्ति**[2] इत्युक्त्वा शिल्पेन सर्वकर्मसाधारणं सम्पाद्यत इति स्पष्टमुक्तम्। महर्ष्यैतरेयेणापि- **आत्मसंस्कृतिर्वाव शिल्पानि छन्दोमयं वा एतैर्यजमान आत्मानं संस्कुरुते।**[3] इत्युक्त्वा शिल्पद्वारा यजमानस्यात्मसंस्कारस्य विधानमुक्तम्। एतत्सर्वमपि तथ्यमवलोक्य कौषीतकिना शिल्पस्य प्राणरूपत्वं प्रतिपादितम्। तद्यथा- **प्राणाः शिल्पानि**[4] इति। ताण्ड्ये तु- **तौ वा एताविन्द्रस्तोमौ (अभिजिद्विश्वजितौ) वीर्यवन्तौ शिल्पं वा एतौ नाम स्तोमावास्ताम्।**[5] मन्त्रेस्मिन् स्तोमरूपेण शिल्पं व्याख्यातमस्ति। यजुर्वेदे- **शिल्पो वैश्वदेवः**[6] इत्युक्तम्। तस्याभिप्रायोयमस्ति यच्छिल्पेषु देवतानामर्थात्पञ्चभूतानां पृथिव्यप्तेजोवाय्वाकाशानामुपयोगः क्रियते, अतः शिल्पं सर्वेषां देवानां निवासस्थानमस्ति। गोपथब्राह्मणे शिल्पशास्त्रस्य प्रशंसायामुक्तमस्ति यच्छिल्पे सर्वा अपि कलाकृतयः समागच्छन्ति। यथा- हस्तशिल्पकला, चित्रकला, स्वर्णाभूषणनिर्माणकला, रथनिर्माणाद्याः कला अत्र सङ्गृहीताः सन्ति। तदुक्तञ्चापि- **शिल्पानि संशति**[7] इति।

**विविधशस्त्रास्त्रम्-**

मन्त्रेण यन्त्रेण वा यस्य प्रक्षेपणं विधीयते तदस्त्रमित्युच्यते। यथा-प्रक्षेपकास्त्रमिति। तद्विविधम्- मान्त्रिकं यान्त्रिकं च। यच्च हस्ते गृह्णन्नेव युद्ध्यते तच्छस्त्रमित्युच्यते। यथा- असिकुन्तादिकमिति।[8] वेदेषु अस्त्रशब्दस्य कृते हेतिर्मेनिरित्यादयश्शब्दाः प्रयुक्ताः सन्ति। तेषु कानिचिद्दिव्यास्त्राण्यासन्। तानि च प्राकृतिकशक्ति-विद्युत्-अग्नि-वायुजन्यानि कैश्चिद्देवैः ऋषिभिश्च प्रदत्तानि भवन्ति स्म। दिव्यास्त्रेषु आग्नेयास्त्रस्य, वायव्यास्त्रस्य, पाशुपतास्त्रस्य, ब्रह्मास्त्रस्य, आथर्वणास्त्रस्य, वारुणास्त्रस्य, सम्मोहनास्त्रस्य, तामसास्त्रस्य, ऐन्द्रास्त्रस्य (वज्रस्य) चोल्लेखो वर्तते। वैदिकसंहितातिरिक्तेऽग्निपुराणे कौटिलीयार्थशास्त्रे च विविधास्त्रशस्त्राणामुल्लेखो विद्यते। अग्निपुराणे पञ्चविधशस्त्रास्त्राणां वर्णनानि सन्ति। यथा-

**यन्त्रमुक्तं पाणिमुक्तं मुक्तसंधारितं तथा।**
**अमुक्तं बाहुयुद्धं च पञ्चधा तत् प्रकीर्तितम्॥**[9]

कौटिलीयार्थशास्त्रे **सर्वतोभद्र-जामदग्न्य-विश्वासघाती-पर्जन्यक**दीनामस्त्राणामुल्लेखो विद्यते। एतदतिरिक्तानि **पांचालिक-शतघ्नी-त्रिशूल-चक्रादीनि चलयन्त्रा**ण्यपि तत्र तत्रोक्तानि। षड्विधानि

1. शतपथब्राह्मणे- 3/2/1/5
2. काठकसंहितायाम्- 8/5
3. ऐतरेयब्राह्मणे- 6/27
4. कौषीतकिब्राह्मणे- 25/12,13
5 तण्ड्यब्राह्मणे- 16/4/8
6. यजुर्वेदे- 29/58
7. गोपथश्रुतौ- उत्तरे- 6/7
8. शुक्रनीतौ- 4/7/181 तः 185 पर्यन्तम्
9. अग्निपुराणे-248/2

वर्मानि (आवरणानि) अपि वर्णितानि सन्ति। यथा- **लोहजालम्, लोहजालिका, लोहपट्टम्, लोहकवचम्, सूत्रकंकटम्, मिश्रितकवचम्** इति। एतदतिरिक्तं **शिरस्त्राणम्, कण्ठत्राणम्, कूर्पासः, कञ्चुकः, वारवाणम्, पट्टम्, नागोदरिका** चेत्येतानि शरीरस्याङ्गविशेषस्य रक्षकान्यावरणान्युक्तानि।

**मानवीयास्त्रशस्त्राणि–**

वेदेष्वस्त्रशस्त्रनिमित्तमायुधशब्दस्य प्रयोगो दृश्यते। आयुधविषये ऋग्वेदस्यैकस्मिन् मन्त्रे इदमुक्तं यद्-

**कण्वा इन्द्रं यदक्रत स्तोमैर्यज्ञस्य साधनम्। जामि ब्रुबत आयुधम्॥**[1] अर्थादायुधं जीवनरक्षकमस्ति तस्माद्योद्धारः स्वभ्रातरं सम्बन्धिनमिवानुजानन्ति। तेष्वायुधेषु **धनुषः, बाणम्, इषुधिः, सृकः, हेतिः, मेनिः, प्रहेतिः, अशनिः, ऋष्टिः, सीसगोलकम्, (तन्त्वा सीसेन विध्यामो)**[2] **हलमुखयन्त्रम्, असिः, स्वधितिः, परशुः, क्षुरः, वाशी, कृपाणम् (चोदयो नृन् कार्पाणे शूर वज्रिवः)**[3]**, शूलम्, चक्रम्, वज्रः (वज्रेण खानि- अतृनन् - नदीनाम्।)**[4]**, उल्का (वि सृज विष्वगुल्काः)**[5]चेति।

एतदतिरिक्तानि रासायनिकायुधान्यपि यत्र-तत्र वर्णितानि सन्ति, विस्तरभयादग्रेसरामः।

**वास्तुशास्त्रम्–**

वैदिकवाङ्मये वास्तुशास्त्र-स्थापत्यकलासम्बद्धा विषयाश्चापि भूयिष्ठेनावाप्यन्ते, येषामध्ययनेन ज्ञातं भवति यत्तदानीं शिल्प-व्यवस्था पूर्णतः प्रोन्नताऽऽसीत्। वास्तुशब्दस्य निर्वचनं प्रस्तूयता निर्वचनशास्त्र-प्रवक्त्रा वैज्ञानिकान्वेषणशीलवता भगवता यास्काचार्येणोक्तम्- **''वास्तुर्वसतेर्निवासकर्मणः''**[6] इति। पाणिनीयव्याकरणस्य **'वस-निवासे'**[7] इत्यस्माद्धातोः **'वसेस्तुन् णिच्च'** इति सूत्रेण च **'वस्'** धातौ तुन् प्रत्यये कृते सति **'वस्तु'** शब्दो निष्पद्यते। णित्वादादिवृद्धिश्च, तेन **'वास्तु'** इति शब्दो निष्पद्यते। तस्य च वास्तोः पाता पालयिता वा वास्तोष्पतिरिति वैदिको देवविशेषः। वास्तुशब्दस्यार्थो भवति वासयोग्यं यत्स्थानं तद्वास्त्विति। अस्य वासयोग्यस्य स्थानस्यावश्यकता सर्वेभ्योऽपि देव-दानव-मानव-पशु-पक्षि-कृमि-कीट- पतङ्ग-पिपीलिका-लता-गुल्म-वृक्ष-वनस्पत्यन्नौषध्यादिभ्यो वर्तत एव। यतस्तु यत्र यो वसति तदेव तस्य वास्तुः। अर्थात्सर्वेऽपि प्राणिनः कश्मिंश्चिदपि स्थानविशेषे निवसन्ति। यथा वैकुण्ठे विष्णुः, कैलाशे शिवः, स्वर्गे इन्द्रादयो देवाः, पाताले दानवाः, पृथिव्यां गृह-भवन-प्रासाद-आलय-निलय-पुर-वेश्मादिषु च मानवाः, समुद्रनदीतडागादिषु जलचरजीवाः, वृक्षकोटरेषु

1. ऋग्वेदे- 8/6/3
2. अथर्वसंहितायाम्- 1/16/4
3. ऋग्वेदे- 10/22/10
4. ऋग्वेदे- 2/15/3
5. ऋग्वेदे- 4/4/2 , यजुर्वेदे- 13/10
6. निरुद्रे-10/2/16
7. भ्वादि- परस्मैपदी, सिद्धान्तकौमुद्याम्

नीडेषु वा खगाः, गुहासु गहनवनेषु च सिंहव्याघ्रादयो वनचरा वन्यप्राणिनः, बिलेषु मूषकमण्डूकसर्पपिपीलिकादयः पशवः, धरणीमाश्रित्य वृक्षवनस्पत्यन्नौषध्यादयो निवसन्ति।

वेदेषु वैदिकवाङ्मयेषु च वसतिदुर्गपुरभवनादिसंकेतैः विकसितवास्तुस्वरूपस्य ज्ञानं भवति। अनेन प्रतीयते यद्वैदिककाले जनाः नागरिककलानां वैज्ञानिकैर्ज्ञानैः परिपूर्णा आसन्। ते नूतनप्रौद्योगिकीप्रयोगेण विशालभवननिर्माणम्, वातानुकूलितभवननिर्माणम्, शालानिर्माणम्, लोहनिर्मितनगरम्, विविधप्रकारकं वज्रलेपादिकञ्च सम्यक्तया कुर्वन्ति स्म। विषयेऽस्मिनुपलब्धानि कानिचनोदाहरणान्यत्रोपस्थाप्यन्ते।

**विशालभवनम्**- विशालभवनस्य भव्यमुदाहरणमृग्वेदे दृश्यते। यथा-

**राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे। सहस्रस्थूण आसते।।**[1] तथा च-
**बृहन्तं मानं वरुणस्वधावः सहस्रधारं जगमा गृहं ते।**[2]

उभयोर्मन्त्रयोः सहस्रस्थूणाभिस्सहितस्य सहस्रद्वारयुतस्य विशालपरिमाणस्य च भवनस्योल्लेखो विद्यते। एतस्मिन्नेव क्रमे त्रिभूमिकभवनस्य विविधप्रौद्योगिकीसम्पन्नस्य शीतातपवर्षासु ऋतुषु च सुखदभवनस्याप्युल्लेखो वर्तते। यथा-

**इन्द्र त्रिधातु शरणं त्रिवरूथं स्वस्तिमत्। छर्दिर्यच्छ मघवद्भ्यः।।**[3]

**लोहनिर्मितनगरम्**- वैदिकवाङ्मये विविधस्थलेषु लोहनिर्मितनगरस्य दुर्गस्य च वर्णनमस्ति। तद्यथा-

**पुरः कृणुध्वम् आयसीरधृष्टाः।**[4] तथा च- **हत्वी दस्यून् पुर आयसीर्न तारीत्।**[5] इति।

**अश्मन्मयीनगरम्**- ऋग्वेदे वर्णनमस्ति यद्वैदिककाले अश्मन्मयीनां नगराणां रचना भवति स्म। एतादृशीनि शतमश्मन्मयीनगराणि दिवोदासायेन्द्रः प्रदत्तवान्। तद्यथा-

**शतमश्मन्मयीनां पुरामिन्द्रो व्यास्यत्।**[6] इति।

**वातानुकूलितभवनम्**- यजुर्वेदाथर्ववेदयोरेकं वातानुकूलितभवनं वर्णितमस्ति। यथा-

**आयने ते परायणे दूर्वा रोहतु पुष्पिणीः।**
**मध्ये ह्रदस्य नो गृहाः पराचीना मुखाकृधि।।**

**हिमस्य त्वा जरायुणा शाले परिव्ययामसि।**
**शीतह्रदा हि नो भुवोऽग्निष्कृणोतु भेषजम्।।**[7]

---

1. ऋग्वेदे- 2/41/5
2. ऋग्वेदे- 7/88/5
3. ऋग्वेदे- 6/46/9
4. अथर्ववेदे- 19/58/4
5. ऋग्वेदे- 2/20/8
6. ऋग्वेदे- 4/30/20
7. अथर्ववेदे- 6/106/1 तः 3 पर्यन्तम्

शुक्लयजुर्वेदे च- **हिमस्य त्वा जरायुणाऽग्ने परिव्ययामसि। पावको अस्मभ्य ँ शिवो भव।।**

तथा च- **अपामिदं न्ययन ँ समुद्रस्य निवेयशनम्। अन्यॉस्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्य ँ शिवो भव।।**[1]

**शालानिर्माणम्**- अथर्ववेदस्यैकं सम्पूर्णं सूक्तं गृहनिर्माणविषयसम्बद्धमस्ति। तत्र प्रकोष्ठद्वयादारभ्य दशप्रकोष्ठयुक्तस्य भवनस्य निर्माणाय विविधप्रौद्योगिकीविज्ञानविषयस्य विशदं विवेचनमस्ति। किं निमित्तं कः प्रकोष्ठः स्यादित्यस्यापि संकेतस्तत्र मिलति। द्वारम्, गवाक्षः, छर्दिश्च कीदृशो भवेदित्यपि वर्णितमस्ति। तत्रेदमुक्तं यत् **ब्रह्मणा शालां निर्मितां कविभिर्निर्मितां मिताम्।**[2] अस्य मन्त्रस्याशयोऽयमस्ति यच्छालानिर्माणं केनचिद् ब्रह्मणा (प्रौद्योगिकीशास्त्रविज्ञेन, कुशलेन मानकर्त्रा, मानचित्रनिर्माणदक्षेण विदुषा वा) कारयितव्यम्। एवमुक्तप्रकारेणाथर्वसंहितायाः नवमकाण्डस्य तृतीयं सूक्तं शालानिर्माण-सम्बन्धिविषयबोधकमिति स्पष्टमेव। तत्र बहुविध प्रौद्योगिकीसाहाय्येनानेकविधसुखसुविधासम्पन्नस्य शालानिर्माणस्य प्रतिपादनमस्ति।

**वज्रलेपः**- गृहं, भवनं, शालां वा चिरकालपर्यन्तस्थायी कर्तुं इष्टकायोजनकाले भित्तिकायामुपरि च वज्रलेपस्य प्रयोगो भवति स्म। परमवैज्ञानिकेनाचार्यवराहमिहिरेण बृहत्संहितायां वज्रलेपनिर्माणविधिवर्णनक्रमे चतुर्विधवज्रलेपस्य प्रतिपादनं कृतम्। तेष्वेको वज्रलेपः धातुनिर्मितः अपरे त्रयश्च विविधद्रव्यविनिर्मिता इति। धातुनिर्मितवज्रलेपो यथा-

प्रथमः प्रकारः-

**अष्टौ सीसकभागाः कांसस्य द्वौ तु रीतिकाभागः।**
**मयकथितो योगोऽयं विज्ञेयो वज्रसंघातः।।**[3]

द्वितीयः प्रकारः-

**आमं तिन्दुकमामं कपित्थं पुष्पमपि शाल्मल्याः।**
**अतसी बिल्वैश्च युतः कल्कोऽयं वज्रलेपाख्यः।।**

**प्रासाद-हर्म्यवलभी-लिंगप्रतिमासु कुड्यकूपेषु।**
**संतप्तो दातव्यो वर्षसहस्रायुतस्थायी।।**[4]

तृतीयः प्रकारः-

**लाक्षा-कुन्दुरुगुग्गुलु-गृहधूम कपित्थबिल्वमध्यानि।..............**
**वज्राख्यः प्रथमगुणैरयमपि तेष्वेव कार्येषु।।**[5]

1. शुक्लयजुर्वेदे- 17/5, 7
2. अथर्ववेदे- 9/3/19
3. बृहत्संहितायाम्, वज्रलेपप्रकरणे श्लोक सं-8
4. बृहत्संहितायाम्, वज्रलेपप्रकरणे श्लोक सं- 1 तः 4 पर्यन्तम्
5. बृहत्संहितायाम्, वज्रलेपप्रकरणे श्लोक सं- 5-6

चतुर्थः प्रकारः-

**गोमहिषाजविषाणैः खररोम्णा महिषचर्मगव्यैश्च।**
**निम्बकपित्थरसैः सह वज्रतलो नाम कल्कोऽन्यः॥**[1]

एवमुक्तप्रकारेण चतुर्विधवज्रलेपस्य निर्माणविधिः ज्योतिर्विद्भिरुक्तः।

विविधाः-

वेदेषु वैदिकवाङ्मयेषु च विविधशिल्पविधीनामुद्योगादीनां च विस्तृतं विवरणमुपलभ्यते। शुक्लयजुषस्त्रिंशत्तमेऽध्याये शिल्पानां शिल्पिनामेव विशेषरूपेणोल्लेखो विद्यते। शिल्पिनां कृते वेदेषु कारुशब्दः प्रयुक्तः। यथा- **कारुरहं ततो भिषग्0।**[2] यजुर्वेदे **शिल्पो वैश्वदेवः** इत्युक्तस्तेनेदं सुस्पष्टं भवति यच्छिल्पे सर्वेषां देवानामर्थात् पञ्चभूतानां पृथिव्यप्तेजोवाय्वाकाशानामुपयागो भवति। अतः शिल्पः सर्वेषां देवानां निवासस्थानमस्ति। अत एव पृथक्पृथग्यज्ञेषु पृथक्पृथगाकृतीनां वेदीनां प्रयोगो दृश्यते। यतो यज्ञवेदीषु देवतानामावाहनं पूजनञ्च भवति। तदर्थं यजमानो यत्फलमिच्छति तत्फलं प्रदातुं यस्यां देवतायां सामर्थ्यं तद्देवतानिमित्तां वेदीं निर्माय यजति तेन स इष्टमाप्नोति। कामस्यानन्तत्वमुक्तं श्रौतशास्त्रेषु यथा- **समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति न समुद्रस्य**[3] इति। तस्मादत्र प्रसङ्गानुसारं विशेषेण चयनयागोक्ताग्निक्षेत्रनिर्माणविषये किञ्चिद्वक्तुमिच्छामि। सप्तसोमयज्ञसंस्थासु प्रकृतिभूतस्याग्निष्टोम-यागस्याङ्गभूतश्चयनयाग उक्तः। चयनं नाम इष्टकाभिः सम्पादितस्थलविशेषः। केवलस्य सोमयागस्य या उत्तरवेदिस्तां वर्धयित्वा तत्रैवेष्टकाभिश्चयनं सम्पाद्य तदुपर्याहवनीयं निक्षिप्य तत्रैव होमः क्रियते। अग्न्याधारत्वादस्य स्थण्डिलस्याग्निचयनमिति संज्ञा। केचिदग्निपदेनापि केवलेन व्यवहरन्ति।

तत्र प्रथमदिने इष्टकानिर्माणाङ्गभूतः पशुरनुष्ठेयः। तत्र पुरुषाश्वगोऽव्यजाः पञ्च पशव इति प्राथमिकः पक्षः। केवलः प्राजापत्यः पशुरनुष्ठेय इति द्वितीयः। वायव्यो वेति तृतीयः। तत्र सर्वत्रापि यागोपयुक्तावशिष्टं पशुशरीरं स्थावरे जले प्रक्षिप्य एवोखेष्टकादीनां निर्माणाय मृदं जलानि च गृह्णीयात्। यस्मिन्पर्वणि इष्टकापशुः क्रियते तदनन्तरमष्टम्यामुखासम्भरणं कर्तव्यम्। अग्रे च संवत्सरादिकालेषु यजमानस्याग्निधारणं वक्ष्यते, तदाधारभूतः पात्रविशेष उखेत्युच्यते। तदर्थं च पात्रनिर्माणयोग्यं मृत्पिण्डं गृहीत्वा तत्र बल्मीकमृदम्, अजलोमानि, लोहाश्मचूर्णानि, शर्कराश्च पर्णकशाय- पक्वजलेन संयुज्य[4] तत्र सिकतामुपकीर्य ऊधर्वतस्तिर्यक् च प्रादेशमात्रीमेकपशुपक्षे, ऊर्ध्वतः प्रादेशमात्रीं, तिर्यक्तः प्रादेशमात्रीं च पञ्चपशुपक्षे चतुरस्रामुखां निर्माय तस्या बहिः प्रदेशे उपरितने वितृतीयभागे समन्ततो वर्तिकामेकां तिर्यक् कृत्वा प्रतिदिशमेकैकां द्वे द्वे वा वर्तिके ऊर्ध्वे पूर्वतनवर्तिकासंस्पृष्टे कृत्वा

1. बृहत्संहितायाम्, वज्रलेपप्रकरणे श्लोक सं- 7
2. ऋग्वेदे- 9/112/3
3. तै.ब्रा.-2/2/5/6
4. पलाशपर्णक्वथितमुदकं मृत्पिण्डे सिञ्चेत्। एताः मृत्पिण्डे सिञ्चिता आपः पलाशपर्णक्वथिता भवेयुः। स्थिरत्वायैव। केवलं मृदोखादिकरणे विशरणं स्यात्। श.प.ब्रा.-6/3/6/1

एकैकस्या वर्तिकाया अग्रे स्तनाकारं च चिह्नं कृत्वा तां चाग्नौ दीपयेत्। तया साकमषाढाख्यामिष्टकां द्वादशाङ्गुलसमविस्तारां स्थानत्रयेऽङ्गुल्याकारचिह्नयुक्तामेकां, विश्वज्योतिर्नाम्नीश्च तिस्र इष्टकाः पचेदित्युखासम्भरणम्। ततश्चयनार्थानामिष्टकानां करणम्। ताश्च चतुर्दशविधा भवन्ति– पद्या, अर्धपद्या, पादोनपद्या, जङ्घामात्री, अध्यर्द्धा, अर्द्धोत्सेधापद्या, अर्द्धोत्सेधा अर्धपद्या, पादभागा, त्रिग्राहिणी, अर्धपादभागा, बृहती, वक्रा, अर्धबृहती, चतुर्भागा इति।

**इष्टकाकरणप्रकारः**

पूर्वं यजमानेनोर्ध्वबाहुना प्रपदोत्थितेन वा समं वंशं मित्वा पुरुषप्रमाणस्य त्रिंशांशं द्वात्रिंशांशं वाऽतिरिक्तं वंशं छेदनेन तावत्प्रमाणं कुर्यात्। ततस्तस्य वंशस्य समा दशविभागाः शलाकादिभिर्वा मित्वा कार्याः। दशस्वपि भागेषु वंशे क्षुरिकादिना वंशस्य त्वचं छित्वा चिह्नानि कुर्यात्। तस्य वंशस्य दशमेन भागेन पदं भवति। पदस्य द्वादशोऽङ्गुलं। एवंविधैरङ्गुलैर्द्वादशाङ्गुलं समचतुरस्रं पद्यानां प्रमाणं सारदारुकाष्ठैः कारयितव्यम्।

अत्राप्येका समस्या समापतति यद्यावत्प्रमाणाः पक्वेष्टका अपेक्षिताः भवन्ति, तासां प्राप्तये आर्द्रावस्थायां ताः कतिप्रमाणाः कारयितव्याः? अस्याः समस्यायाः समाधानं कुर्वद्भिः वैदिकविज्ञान–मर्मज्ञैरस्माकमृषिभिः श्रौतशास्त्रेषु सूक्ष्मातिसूक्ष्मचिन्तनं प्रस्तूयता प्रोक्तं यद्यतो चयनयागे विहितेष्टकाः शोषपाकाभ्यां शुष्यन्तो क्षीणाः भवन्ति। तस्माद्विहितेष्टकामानात्तत्र द्वात्रिंशन्मानेनाधिकं मानं सर्वासामिष्टकानां कार्यम्। तदुक्तं श्लोकशुल्बे–

**''ह्रसते पाकशोषाभ्यां द्वात्रिंशद्भागमिष्टकाः।**
**तस्मादार्द्रप्रमाणन्तु कुर्यान्मानाधिकं बुधैः॥''**[1]

अनेन श्लोकेनेदं स्पष्टं यन्मापनादिषु कार्येषु तेषां परमर्षीणां बुद्धिरतीवोत्कृष्टाऽऽसीत्। अर्थात्ते वैज्ञानिकाः स्वीयां प्रयोगशालायां प्रायोगिकपक्षमनुसृत्यैव किमप्युपदेशं सिद्धान्तं वा प्रतिपादयन्ति स्म। अद्याप्येष विधिरेवानुक्रियते। तस्मादिष्टकानिर्माणार्थं यद्यन्त्रं सारदारुकाष्ठमयं निर्मीयते तत् विविधप्रमाणेष्टकानिर्माणाय विविधप्रमाणात्मकं तत्रापि द्वात्रिंशत्प्रतिशतांशं वर्धयित्वैव निर्मीयते। अनेन विधिना विनिर्मितेष्टका अद्यापि शोषपाकाभ्यामनन्तरमपेक्षितपरिमाणानुसारमुपयुक्ताः भवन्त्येव। उपर्युक्तेन विधिनेष्टकानिर्माणार्थं द्वात्रिंशांशमधिकं दारुमयं विविधप्रमाणात्मकं यन्त्रं निर्मायेष्टकानिर्माणं कर्त्तव्यम्। तत्र द्वादशाङ्गुलसमचतुरस्राः पद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तृता अर्धपद्याः, द्वादशाङ्गुलसमचतुरस्रा एकेन पादेन (कोणेन) न्यूनाः पादोनपद्याः, अष्टाङ्गुलसमचतुरस्रा जङ्घामात्र्यः, अष्टादशाङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अध्यर्धाः, द्वादशाङ्गुलसमचतुरस्रास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्धोत्सेधापद्याः, द्वादशाङ्गुलदीर्घाः षडङ्गुलविस्तारास्त्र्यङ्गुलोच्चा द्व्यङ्गुलोच्चा वा अर्धोत्सेधा अर्धपद्याः, षडङ्गुलसमचतुरस्राः पादभागाः, चतुर्विंशत्यङ्गुलदीर्घा अष्टादशाङ्गुलविस्तारास्त्रिग्राहिण्यः, षडङ्गुलदीर्घास्त्र्यङ्गुलविस्तृता अर्धपादभागाः, चतुर्विंशत्यङ्गुलसमचतुरस्रा बृहत्यः, चतुर्विंशत्यङ्गुलदीर्घा द्वादशाङ्गुलविस्तृता अर्धबृहत्यः, त्र्यङ्गुलसमचतुरस्राश्चतुर्भागा इति। उच्चता तु षडङ्गुलमिता

1. शुल्बे–30तमः श्लोकः।

चतुरङ्गुलमिता वा सर्वासां पूर्णोत्सेधानाम्। अर्धोत्सेधापद्याऽर्धपद्ययोस्तु द्व्यङ्गुलं त्र्यङ्गुलं वोच्चत्वम्।

**वक्रेष्टकासाधनम्–**

पूर्वमर्धव्यामेन व्याममात्रप्रमाणं वृत्तं विलिख्य तन्मध्ये चतुर्विंशत्यङ्गुलं समचतुरस्रं साधयित्वा तस्य कोणेषु कोणादारभ्य वृत्तपरिधिं यावद्रेखा कुर्यात्, एवं चतुरस्रस्य दिश आरभ्य वृत्तपरिधिं यावद्रेखा दद्यात्। एवं कृते सत्यष्टौ वक्रा विभागा जायन्ते। एतादृशं क्षेत्रं विलोक्य वक्रदारुघटनेन वक्रेष्टकानां प्रमाणं निष्पादनीयम्। उदाहरणार्थमिह चित्रं प्रदर्श्यते। तद्यथा–



एवमुक्तप्रकारेण वक्रेष्टकानिर्माणं कर्तव्यम्। सर्वास्विष्टकासु अङ्गुलिकाष्ठादिना त्रीणि-त्रीणि चिह्नानि कार्यानि। तानि च चिह्नानि वक्राणि, ऋजूनि, तिरश्चालिखितानि स्युः। तत्र वक्राणि- ◡◡◡ एतादृशानि, ऋजूनि- | | | एतादृशानि, तिरश्चालिखितानि च- — — — एतादृशानि चिह्नानि कार्याणि।

**अथेष्टकानां संख्या–**

तत्र सप्तत्युत्तरैकशतमेकादशसहस्रसंख्यकाः समग्रा इष्टका भवन्ति। तास्वष्टशताधिकं दशसहस्रमिष्टकाः लोकम्पृणासंज्ञकाः, सप्तत्यधिकं शतत्रयमिष्टकाः यजुष्मत्यसंज्ञकाश्च भवन्ति।

देवयाज्ञिकेन पक्वेष्टकानां संख्याविषये एवमुक्तम्-''**वक्रालिखितानां पादभागानां सप्तदशशतानि सद्वात्रिंशानि ( 1732 ), सार्द्धसप्तसहस्रसंख्यास्त्रिंशदधिका ऋज्वालिखिताः पादभागाः ( 7530 )। द्वे शते द्वाषष्ट्यधिके वक्रालिखिता अर्धपादभागाः ( 262 ), षोडशाधिकानि चत्वारि शतानि ऋज्वालिखिताः अर्धपादभागाः( 416 )। चतुर्भागाश्चतस्रो वक्रालिखिताः( 4 ), अष्टौ ऋज्वालिखिताश्चतुर्भागाः( 8 ), एकोनषष्ट्यधिकानि सप्तशतानि पूर्णोत्सेधाः पद्याः( 759 ), अष्टादशपद्याः अर्धोत्सेधाः( 18 )। द्वानवत्यधिकमेकशतमर्धपद्याः( 192 ), तासां मध्ये चतुर्विंशतिः पूर्णोत्सेधाः तिरश्चालिखिता अर्धपद्याः ( 24 ), चतस्रश्चार्धोत्सेधाः अर्धपद्यास्तिरश्चालिखिताः ( 4 ), अष्टावर्धपद्या अर्धोत्सेधा ऋज्वालिखिताः ( 8 ), द्वे वक्रालिखिते अर्धपद्ये पूर्णोत्सेधे**

**(2), शेषा ऋज्वालिखिताः। पञ्चाशज्जङ्घामात्र्यः (50), सप्ततिस्त्रिग्राहिण्यः षड्बृहत्यः (6), सप्त वा(7), चतस्रोऽर्धबृहत्यः(4), द्वे पादोने(2)च। अनेन11172इष्टकाः सिध्यन्ति। इष्टकानामियं संख्योपधानकालीना परं निष्पादनकाले एताभिरुक्ताभिस्संख्यकाभिरधिका इष्टकाःनिष्पादनीयाः। तदनु महत्य इष्टकाश्चतुर्गुणाः, मध्यप्रमाणाः द्विगुणाः, अर्धोत्सेधाश्चतुर्गुणाः। पादभागा अर्धपादभागा अध्यर्धगुणाः निकृष्टपक्षे। एवमेवान्यास्विष्टकासु वृद्धिः कार्या। यतः पाकशोषाभ्यामिष्टकाप्रमाणस्य ह्रासो भवति। तेन त्रिंशांशेन द्वात्रिंशांशेन वा पादभागस्यार्धप्रमाणमधिकं कार्यम्।''[1] अत्राधः सचित्रमिष्टकानां स्वरूपं प्रदर्श्यते-**




आसूपर्युक्तास्विष्टकासु काश्चिद्वक्रालिखिताः, काश्चिदृज्वालिखिताः, कश्चिच्च पुनः तिरश्चालिखिताः भवन्ति। काश्चित्पूर्णोत्सेधाः, काश्चिदर्धोत्सेधाश्चापि भवन्ति। उक्ताः चतुर्दशविधा इष्टकाः चयनयागे पञ्चसु चितिषूपधीयन्ते। एतासु काश्चन मन्त्रैरुपधीयन्ते काश्चन तुष्णीम्। या नाम मन्त्रैरुपधेयास्ता यजुष्मत्य इत्युच्यन्ते। याश्च पुनस्तूष्णीं ता लोकम्पृणा इत्युच्यन्ते। चितिक्रमेणेष्टकासंख्या-

| चितिनामानि | समग्रा इष्टकाः | यजुष्मत्यः | लोकम्पृणाः |
|---|---|---|---|
| प्रथमायां चितौ | २००६ | ७७ | १९२९ |
| द्वितीयायां चितौ | १९९१ | ४१ | १९५० |
| तृतीयायां चितौ | २०२० | ७० | १९५० |
| चतुर्थ्यां चितौ | १९५७ | ४७ | १९५० |
| पञ्चम्यां चितौ | ३०५६ | १३४ | २९२२ |
| योगः | ११०७० | ३६९ | १०७०१ |

**गार्हपत्येष्टकाः-२१+धिष्ण्येष्टकाः-७८+शतपथोक्ताः सिकता-पुष्करपर्णाद्याः-२८+एका यजुष्मती अन्या।** आहत्य सर्वा अष्टानवत्युत्तरशताधिकमेकादशसहस्रसंख्यकाः **१११९८** इष्टकाः पञ्चसु चितिषूपधीयन्ते।

1. दे.या.प. 518तमे पृष्ठे ।

**अग्निक्षेत्रनिर्माणम्**

एतत्तु पूर्वमेवोक्तं यच्चयनं नाम अग्निक्षेत्रे इष्टकानामुपधानेन विनिर्मितं नूतनं किमपि विशिष्टं स्थलमुच्यते। तच्च सार्धसप्तपुरुषात्मकम्। तत्र मध्ये द्विपुरुषायामं द्विपुरुषविस्तरं स्थण्डिलं निर्माय तत्संलग्नमेव दक्षिणपश्चिमोत्तरभागेषु त्रीण्यपि एकैकपुरुषविस्तारं, दक्षिणोत्तरयो: पार्श्वयो: सारत्निकैक- पुरुषायामं पश्चिमे च सवितस्तिकपुरुषायामं स्थण्डिलत्रयं निर्मातव्यम्। स्थण्डिलमिदं प्राङ्मुखं निर्मातव्यम्। तस्य दक्षिणोत्तरयोर्ये स्थण्डिले तयो: क्रमाद्दक्षिणोत्तरौ पक्षौ इति संज्ञा। पश्चिमस्य च पुच्छमिति व्यवहार:। मध्यमस्य चात्मेति। इत्थं स्थानं प्रकल्प्य तच्च रज्ज्वा वेष्टयित्वा तस्य समन्तात् खातं कृत्वा तत्र एकषष्ट्यधिकशतद्वयसंख्याकान्, चतुर्णवत्यधिकशतत्रयसंख्याकान्वा पाषाणान् इष्टकान्वा निरन्तरं परस्परं संलग्नान् निखनेत्। तत: स्थण्डिलस्य वायव्यकोणे त्रय: पाषाणा: जङ्घानाभिमुखमात्रा: क्रमशो निखातव्या:। अस्यैव चयनस्य पञ्चनवत्यावृत्याऽनुष्ठानं सूत्रकारेणोक्तम्। तत्र प्रथमावृत्तावग्निक्षेफलमुक्तम्। द्वितीयाद्यावृत्तौ तु प्रतिचयनमेकैकपुरुषप्रमाणं वर्द्धयित्वाऽग्निक्षेत्रं मापयेत्पञ्चनवतितमचयनपर्यन्तम्। तदनुसारेणेष्टका अपि परिमाणतो वर्द्धनीयात्, न संख्यात:। सर्वत्र प्रथमायां चितौ यावत्य इष्टकास्तावतीभिरेव पञ्चनवतितमाऽपि चिति: सम्पादनीया। परिमाणं परं वर्द्धते इत्यवगन्तव्यम्। अत्र चावृत्तौ न क्रमनियम:, स्वेच्छया यां काञ्चित् चितिं कर्तुं शक्नोति। तत्रादौ गार्हपत्यस्याग्ने: स्थण्डिलं निर्मातव्यम्। तच्चैकचितिकं त्रिचितिकं वा। विस्तारस्तु चतुररत्निमात्रो मण्डलाकारश्च। एकैकस्यामपि चितौ एकविंशतिरिष्टका: भवन्ति। तत्रार्द्धबृहत्यश्चतस्र:, पद्या: सप्त, द्वे अर्धपद्ये, अष्टौ वक्रेति।

**गार्हपत्यचिते: सचित्रप्रदर्शनम्**



**वक्रेष्टका- ८**
**अर्धपद्या- २ ( ६X६X६ )**
**पद्या - ७ ( १२X१२X६ )**
**अर्धबृहती- ४ ( १२X२४X६ )**
**कुल =२१ इष्टकाएँ ( ८यजुष्मती, १३लोकम्पृणा )**

स्थण्डिलम्परित: चितेरवष्टम्भनार्थं परिश्रितोऽप्येकविंशतिसंख्याकास्त्र्यङ्गुलविस्तृता: पाषाणा: निखातव्या:। उपर्युक्तविधिना विनिर्मितं गार्हपत्यस्थण्डिलं चात्वालान्नीतया मृदा विलिप्य तदुपरि उख्यमग्निं स्थापयेत्। ततो नैर्ऋत्यां दिशि दूरं गत्वा कृष्णवर्णास्तुषपक्वा: निर्ऋतिसंज्ञकास्तिस्र इष्टका: श्वभ्रादौ निधाय तत्रैव शिक्यं रुक्मं पाशमासन्द्यादिकं च निरस्यागच्छेत्।[1]

1. निर्ऋतिं हरन्ति। पादमात्र्यो भवन्ति। दशिं यन्ति। तिस्र इष्टका उपदधाति। श. प. ब्रा.-7/1/3/1.7.8.14

ततः शालायामागत्य प्रायणीयेष्टिं हविष्कृदाह्वानान्तां कृत्वा षड्गवं द्वादशगवं चतुर्विंशतिगवं वा हलं सज्जीकृत्य तेनाग्निक्षेत्रभूमिं कृषेत्।(अत्र हलकर्षणे दोषाभावः) ततः प्रायणीयशेषं समाप्यातिथ्येष्टिं चानुष्ठाय, प्रवर्ग्योपसदौ प्रकृतिवत्कुर्यात्।

**चितीनां नामानि—**

शतपथश्रुतौ ''**द्रोणचितं वा रथचक्रचितं वा कङ्कचितं वा प्रउगचितं वोभयतः प्रउगं वा**''[1] कात्यायनेनाप्याह- ''**द्रोणचिद्रथचक्रचित्कङ्कचित्प्रउगचिदुभयतःप्रउगः समुह्यपुरीषः**''[2] एषां विविध- चितीनां स्वरूपाणि विविधानि सन्ति। पृथक् पृथक् कामनानुगुणं चितेः प्रकाराः शास्त्रेषूक्ताः। यथा- ''**द्रोणचितं चिन्वीतान्नकामो, द्रोणे वा अन्नं भ्रियते सयोन्येवान्नमवरुन्धे।**''[3] अर्थादन्नकामनया द्रोणचितेर्विधानमस्ति। ''**रथचक्रचितं चिन्वीत भ्रातृव्यवानिति परिमण्डलो भवति।**''[4] अनेन सूत्रेण स्पष्टमिदं भवति यद्यो ह्याहिताग्निः शत्रुभिराक्रान्तः स्यात् स तच्छमनार्थं रथचक्राकृतिरिव वृत्ताकारं रथचक्रचितिं चित्वा यागः कुर्यात्। ''**प्रउगचितं चिन्वीत भ्रातृव्यवान्।**''[5] शत्रुभिः परितो वेष्टितो यजमानः शत्रुनाशाय प्रउगचितिं चित्वा यागः कुर्यात्। ''**उभयतः प्रउगं चिन्वीत यः कामयेत प्रजातान्भ्रातृव्यान्नुदेय प्रतिजनिष्यमाणानित्युभयतः शकटाकृतिर्भवति । यथा विमुखे शकटे।**''[6] अर्थादुत्पन्नस्य शत्रोर्विनाशाय भविष्ये चोत्पद्यमानानां शत्रूणां विनाशाय शकटाकृतिमुभयतः प्रउगं चितिं चित्वा यागः कुर्यात्। ''**समुह्यं चिन्वीत पशुकाम इति समूहन्निवेष्टकामुपदधाति।**''[7] अर्थात् पशूनां कामना मनसि स्याच्चेत् समुह्यपुरीषचितिं चित्वा यागः कुर्यात्। अत्रेष्टकास्थानीयाः मृत्पिण्डाः स्थाप्यन्ते।

अत अनन्तरं तैत्तिरीयसंहितायां श्येनचितिविषयकं प्रमाणमपि मिलति। तदुक्तम्- ''**श्येनचितिं चिन्वीत सुवर्गकामः। श्येनो वै वयसा पतिष्ठः श्येन एव भूत्वा सुवर्गलोकम्पतति।**''[8]

अर्थात् स्वर्गकामनया श्येनचितिं चित्वा यागः कर्त्तव्यः। अस्याः चितेराकृतिः श्येनपक्षी इव भवति। अस्या अपि पञ्चप्रस्तारा भवन्ति। प्रत्येकेषु प्रस्तारेषु सविशेषात्मापक्षपुच्छाः भवन्ति। अस्याः पक्षौ वक्राकृतिकौ भवतः। एकस्मिन् प्रस्तारे शतद्वयमिष्टकाः भवन्ति।

एवमुक्तप्रकारेण पञ्चप्रस्तारेषु सहस्रमिष्टकाः भवन्ति। सत्याषाढश्रौतसूत्रे एतस्याः चितेर्विषये उक्तम्- ''**श्येनचितं चिन्वीत सुवर्गकामः, वक्रपक्षो व्यस्तपुच्छः श्येनाकृतिर्भवति**''[9] इति।

---

1. श.प.ब्रा.-6/7/2/8
2. का.श्रौ.सू.-16/5/9
3. तै.सं.-5/4/11
4. सत्या.श्रौ.सू. 12/8/8
5. सत्या.श्रौ.सू. 12/8/6
6. सत्या.श्रौ.सू. 12/8/7
7. सत्या.श्रौ.सू. 12/8/11
8. तै.सं.5/4/11
9. सत्या.श्रौ.सू. 12/8/3

शुक्लयजुर्वेदसंहितायां शतपथब्राह्मणे च सुपर्णचितेर्महत्त्वं विशेषेणोपस्थापितम्। तद्यथा– **''सुपर्णोऽसि गरुत्मान्''**[1] इति। अत्रास्मिन् निबन्धे सुपर्णचितिमभिलक्ष्यैव वर्णनं प्रस्तूयते। एतदति– रिक्ताश्चापि चितयः श्रूयन्ते। यथा– कूर्मचितिः, श्मशानचितिः, छन्दचितिः, अलजचितिरित्यादयः। परमधुना सुपर्णचितिश्येनचित्योश्चोभयोरेव प्राशस्त्यं वर्तते। अन्यासां चितीनां केवलं नामान्येव श्रूयन्ते। तासां स्वरूपाण्यप्यनुपलब्धानि सन्ति। स्वरूपाभावे तासां निर्माणमतिकठिनं भवति, इति मत्वैवेदानीं सुपर्णचितेः पञ्चप्रस्ताराणां विषये तावत्किञ्चिद्विचार्यते।

**अग्निक्षेत्रे इष्टकोपधानम्**–

उपसदां प्रथमेऽहनि गार्हपत्यं चित्वा सुपर्णचितेरात्मक्षेत्रं कर्षयित्वा दर्भस्तम्बमुपदधाति। एकमूलोऽनेकशाखः स्तम्ब इत्युच्यते, दर्भाणां स्तम्बो दर्भस्तम्बस्तमुपधाय, सोमक्रयणं सोमातिथ्येष्टिं सम्पाद्य, पुष्करपर्णञ्चाहवनीये समुपधाय, लोगेष्टकामात्मन्युपधाय, सिकतां निर्वाप्यात्मनि पुष्करपर्णमुपधाय (दर्भस्तम्बोपरि), रुक्मेष्टकां पुरुषेष्टकाञ्चोपधाय, तं पुरुषमालभ्य यजमानः साम गायति।[2] सामगानानन्तरमध्वर्युः पञ्चगृहीतमाज्यं प्रतिदिशं गत्वा गत्वा विभागेन पुरुषस्योपरि जुहुयात्।[3] तदनन्तरं यजमानः उस्सा अस्पृष्टं यथा स्यात्तथा पुरुषमवच्छाद्य दक्षिणोत्तरायतौ स्वौ बाहू प्रसारयेत्। तत्रोभयत्राऽध्वर्युः स्रुचोर्निधानार्थं चिह्नद्वयं कुर्यात्। तत्र च प्रागग्रे स्रुचौ स्थापयेत्। आत्मनि मध्ये हिरण्मयस्य पुरुषस्योपरि पाषाणमयीं छिद्रवतीं स्वयमातृण्णाख्यामिष्टकामुपदधाति। तत अध्वर्युरुदङ्मुखोपविश्य दूर्वेष्टकां स्वयमातृण्णायामुपरिभागे उपदध्यात्। स्वयमातृण्णायाः पुरस्तात् भूमावर्द्धपद्यामुपदधाति। दूर्वायाः पुरस्तात् द्वियजुषं पद्यामनूकस्योपरि उदङ्मुख उपदध्यात्। द्वियजुषः पूर्वे रेतःसिचौ द्वे इष्टके पद्ये प्राग्लक्षणे उदङ्मुख उपदध्यात्। रेतःसिग्भ्यां पुरस्ताद्विश्वज्योतिषं पद्यामिष्टकाम्, विश्वज्योतिषः पुरस्तात्संलग्ने द्वे पद्ये प्राग्लक्षणे ऋतव्ये उपदध्यात्। ऋतव्ययोः पुरस्तात् अषाढाख्येष्टकामुपदध्यात्। अषाढादक्षिणे भागे अरत्निमात्रे पद्यालोकद्वयमन्तरालं विहाय तृतीये पद्यालोके अवकासु पूर्वमेव तत्र स्थापितासु पुरुषसम्मुखं कूर्ममुपदध्यात्। ततोऽध्वर्युः चतुर्ष्वनूकान्तेषु पञ्चपञ्चापस्या इष्टका उपदध्यात्। ततो व्याघारणवत् प्रथमं दक्षिणेंऽसे, तत उत्तरश्रोण्याम्, ततो दक्षिणश्रोण्याम्, तत उत्तरेंऽसे, ततो मध्ये। अनेन क्रमेण चतुर्ष्वक्ष्णयादेशेषु मध्ये च दश दश प्राणभृत् उपदधाति स्वयमातृण्णापर्यन्तम्। एवं चतुर्ष्वक्ष्णयादेशेषु चत्वारिंशत्प्राणभृत उपहिताः। अवशिष्टा दश। तासां दशानां मध्ये चतुर्ष्वपि स्थानेष्वक्ष्णयासंलग्ने द्वे द्वे। एवमष्टौ। पश्चादनूकमभितश्च द्वे एवं दश। स्वयमातृण्णासंलग्नां पादोनां पद्याञ्चोपदधाति। आसां सप्तसप्ततिसंख्यकानां यजुष्मतीष्टकानां समन्त्रकमुपधानं विहितम्।

एवमुपर्युक्तविधानेन यजुष्मतीनामुपधानं कृत्वाऽनन्तरं लोकम्पृणानामुपधानं कुर्यात्। तत्रात्ममध्ये षट्सप्ततिः पादमात्र्यः, अष्टाविंशतिरर्धपद्याः, नवशतानि चतुर्विंशत्यधिकानि पादभागाश्चात्मनो

---

1. शु.य.सं. 12/4 ( श.प.ब्रा. 6/7/2/6( तै.सं.–4/1/10/5
2. सत्य साम गायति । का. श्रौ. सू. 17/3/28 (पुरुषचित्रे साम गायति । का.श्रौ.सू.–17/4/4
3. उपविश्य पञ्चगृहीतं जुहोति । का.श्रौ.सू.–17/4/7

दक्षिणकोणादारभ्य स्वयमातृण्णापर्यन्तं प्रदक्षिणं पूर्वानूकपर्यन्तं लोकम्पृणा इष्टका उपदध्यात्। ततो दक्षिणांससमीपं प्रत्यागत्य प्रागनूकदक्षिणांसाक्ष्णयान्तराले लोकम्पृणाशेषमुपदध्यात्। पक्षपुच्छात्मसन्धेरारभ्य पराग्भिरिष्टकाभिः पक्षपुच्छानि चिनुयात्। तत्र प्रथमं दक्षिणपक्षं, ततःपुच्छम्, तत उत्तरपक्षम्। दक्षिणपक्षे आत्मसन्धेरारभ्योत्तराभिमुखं दक्षिणसंस्थं प्रदक्षिणं प्राङ्मुखः, पुच्छे आत्मसन्धेरारभ्य प्रत्यक्संस्थम्, उत्तरपक्षे चात्मसन्धेरारभ्योदक्संस्थं दक्षिणामुखो लोकम्पृणानां चयनं कुर्यात्। पक्षपुच्छेषु यजुष्मतीनामेवोपधानं, न लोकम्पृणानामिति। एवमुक्तप्रकारेण सर्वासु चितिषु पराग्भिरिष्टकाभिर्लोकम्पृणा उपदध्यात्। सर्वचितिषु उपसत्सु पौर्वाह्णिक्यापराह्णिक्यन्तरे चात्वालात्पुरीषमादाय निवपेत्। मध्ये न्युप्तेन पुरीषेण मध्यादारभ्य पूर्वमनूकस्य समदर्धभागं छादयेत्। ततस्तेनैव पुरीषेण प्रदक्षिणं सर्वमात्मानं छादयेत्। ततो दक्षिणपक्षं, पुच्छम्, उत्तरपक्षं च प्रादक्षिण्येन छादयेत्। सर्वासु चितिषु एवं प्रकारेण पुरीषं निवपेत्।

यत्राग्निष्टोमादौ एका सुत्या तिस्र उपसदः तस्मिन् क्रतौ प्रथमायामुपसदि प्रथमां द्वितीयां च चितिं सपुरीषां चिनुयात्, द्वितीयायामुपसदि तृतीयाद्यास्तिस्रश्चितीः सपुरीषाश्चिनुयात्, विकर्णाद्यग्न्युत्थानप्रैषान्तं च कुर्यात्। तृतीयायामुपसदि पञ्चगृहीतादि कर्म भवति। चितीनां पञ्चप्रस्ताराः भवन्तीत्युक्तं प्राक्, पञ्चानामपि प्रस्ताराणामिष्टकाभिश्चयनप्रकारास्तु भिन्ना एव। प्रस्तुतेऽस्मिन् लघुनिबन्धे सर्वेषां सचित्रप्रदर्शनं न सम्भवमतः प्रथमप्रस्तारस्य चित्रमत्रोपस्थापयामि। तद्यथा-



उपर्युक्तेनानेन विधिना चितियन्त्राणि निर्माय यो यागो विधीयते स चयनयागः। चितियन्त्रेष्वेषु मध्यभागस्यात्मेति संज्ञा भवति। सोऽयमात्मा यजमानस्यैव तेनेदं स्फुटं भवति यद्योऽयं यजमान आत्मक्षेत्रमुपरि संस्कार: करोति तेन संस्कारेण तस्य यजमानस्यैवात्मा संस्कृतो भवति। जाते चात्मसंस्कारे स जीवन्मुक्तो भवति। अत एव चयनयागस्य फलं मुक्तिरित्युक्तं श्रौतशास्त्रेषु। तथा चा**'त्मसंस्कृतिर्वै शिल्पानि'**[1] इति कथनमपि परिपुष्टं भवति। आत्मनि पञ्चप्राणा: स्थिता: भवन्ति तस्माच्चितीनां पञ्चप्रस्तारा: भवन्ति तत्र याग: कर्त्तव्य:।

विवरणेनानेनेदं सुस्पष्टमेव यच्चयनयागे चितीनां यत्स्वरूपं व्याख्यातं तद्वैज्ञानिकरीत्या प्रतिपादितम्। **विज्ञानं यज्ञं तनुते**[2] इति कथनं तु अस्मिन् यागपक्षे निरतिशयं घटते। शिल्पत्वगुणवैभवादस्य प्रौद्योगिकीत्वमपि कल्पयितुं शक्यते। अनेकविधाग्निचितिनिर्माणद्वारा प्रौद्योगिकीविज्ञानस्य वास्तुविज्ञानस्य च स्पष्टं स्वरूपमत्र मिलत्येव। नानाविधौषधीनामपि प्रयोगोऽत्र विहितस्तेन रसायनविज्ञानस्यापि प्रचुरप्रदर्शनमस्त्येव। आत्मापुच्छपक्षादिभावैर्जीवविशेषस्य कल्पनमपि जीवविज्ञानविषयं प्रकाशयति। देवतानामत्रावाहनपूजनादिकं च भवति तेनास्याधिदैविकत्वम्, पुरुषशरीरावयवानां तथा चाऽऽध्यात्मिकपक्षस्योपकल्पनन्तु नितान्तमाध्यात्मिकपक्षमनुसरति। भौतिकस्याकाशपृथिवीवाय्वग्नि–दिगादितत्त्वानां स्वरूपोपपादनमाधिभौतिकरहस्यमुद्घाटयति। तेनात्र विविधवैज्ञानिकपक्षाणां निदर्शनं सञ्जातमत: दाढ्र्येनेदं शक्यते वक्तुं यच्चयनयागस्य चितिनिर्माणप्रक्रिया नितान्तं वैज्ञानिकसिद्धान्ताधारे विनिर्मिता। नास्त्यत्र कश्चिल्लेशतोऽपि सन्देहस्यावसर:।

यतस्तु यथाद्यतनीया: तथाविधा: वैज्ञानिका: पारमाण्विकशक्तीनां विषये चिन्तनं मन्थनं च कृत्वा स्वीयायां प्रयोगशालायां तेषां प्रतिपादनं विधाय सिद्धान्तप्रतिपादनपूर्वकमाविष्कारादिकं कुर्वन्ति, तथैवाऽस्माकं पूर्वजा: सप्तविधा ऋषय उक्तास्ते यथा–

**सप्त ब्रह्मर्षिदेवर्षिमहर्षिपरमर्षय: ।**
**काण्डर्षिश्च श्रुतर्षिश्च राजर्षिश्च क्रमावरा: ।।**[3]

अनेन वचनेन व्यासादयो महर्षय:, कण्वादयो देवर्षय:, भेलादय: परमर्षय:, वशिष्ठादय: ब्रह्मर्षय:, सुश्रुतादय: श्रुतर्षय:, ऋतुपर्णादय: राजर्षय:, जैमिन्यादय: काण्डर्षय: प्रसिद्धा: सन्ति। ते च सप्तर्षय: यज्ञशालाभूतायां स्वीयां प्रयोगशालायां कृष्णाजिनरूपेषूपयुक्तासनेषूपविष्टास्सन्तो विविधवैज्ञानिकरहस्यानामुद्घाटनं वैदिकविज्ञानसिद्धान्तानाञ्च प्रतिपादनञ्चक्रु:। तेषां या दृष्टिरासीत्सा सार्वभौमिकी, तेषामनुष्ठानरूपा: प्रयोगा: सर्वविधकल्याणात्मकाश्चासन्। परमद्यतनीया: वैज्ञानिकास्तु केवलं ध्वंसात्मकसिद्धान्तानां प्रतिपादनं कृत्वा जगत: मूलस्वरूपमुच्छेत्तुं स्वीयामूर्जाशक्तिं प्रयुञ्जन्ति। नैतैराविष्कारैर्जनकल्याणं जगत्कल्याणं वा सम्भवमपितु तै: केवलं चराचराणां स्वाभाविकप्रयत्नानां विध्वंस एव भवितुमर्हति भवति च।

---

1. गोपथब्राह्मणे– 2/6/7
2. तै.उपनिषद्–2/5/1
3. हिन्दूधर्मकोषे (डा0राजवलीपांडे) 138तमे पृष्ठे ऋषिपदव्याख्याने ।

तस्मादस्माकं पूर्वजानां ऋषीणां यच्छिवसङ्कल्पात्मकं यज्ञविज्ञानसदृशं कर्मानुष्ठानमासीत्त-देवास्माभिरवलोकनीयं चिन्तनीयं सर्वविधप्रयत्नैराचरणीयञ्च। तेनैवास्माकं सर्वविधकल्याणं सम्भवम्। अत एवोक्तं श्रुतौ- **''नान्यः पन्था विद्यतेऽयनाय''**[1]।

वेदेष्वनेकेषु मन्त्रेषु शिल्पसम्बद्धानामन्येषामपि यन्त्राणां वर्णनमस्ति। शरीररचनाज्ञानायेदमुक्तं यदस्माभिः शरीररूपयन्त्रस्य ज्ञानमवश्यं कर्त्तव्यम्। यथा- **तन्वो यन्त्रमशीय।**[2] तैत्तिरीयसंहितायामनेकविधयन्त्राणामुल्लेखो विद्यते। यथा- वायुविज्ञानाय वातयन्त्रम्, ऋतुविज्ञानाय ऋतुयन्त्रम्, दिग्ज्ञानाय दिग्यन्त्रम्, प्रकाशयन्त्रेभ्यस्तेजोयन्त्रम्, ऊर्जासम्बन्धियन्त्रेभ्यः ओजोयन्त्रम् इत्यादि।

एतदतिरिक्तं विमाननिर्माणेन सह वस्त्रोद्योगस्य, गृहोद्योगस्य च बहुविधं वर्णनमुपलभ्यते। वस्तुतो वेदेषु विमाननिर्माणस्य अन्तरिक्षयात्रायाश्च बहुविधं प्रौद्योगिकीविज्ञानसहितं वर्णनमस्ति। समयाभावात् नातोऽधिकं प्रपञ्चमत्र कर्तुमीहे। यतस्तु शास्त्रेषु विज्ञानरूपेण यज्ञादिष्वावाहिताः देवा एव स्तुताः सन्ति। देवानां विषये इदमुच्यते यत्-

**असितगिरिसमं स्यात्कज्जलं सिन्धुपात्रे**
**सुरतरुवरशाखा लेखनीपत्रमुर्वी।**
**लिखति यदि गृहीत्वा शारदा सर्वकालं**
**तदपि तव गुणानामीश पारं न याति।**

---

1. शु.य. संहितायाम् -31/18
2. यजुर्वेदे- 4/18

# 'क्ष' 'ज्ञ' इत्येताभ्यां लिपिभ्यां सङ्केत्ययोरक्षरयोः स्वरूपस्य विचारः

**डॉ. आमोदवर्धनकौण्डिन्न्यायनः**

वेदाङ्गशिक्षाशास्त्रग्रन्थेषु प्रातिशाख्येषु शिक्षेति प्रसिद्धेषु ग्रन्थेषु च वर्णसमाम्नाये 'क्ष' इति लिप्या 'ज्ञ' इति लिप्या च सम्प्रति सङ्केत्यमानयोरक्षरयोः पृथगुल्लेखो न प्राप्यते। तथापीदानीन्तनाः प्रायः सर्वेऽपि संस्कृताध्येतार एताभ्यां लिपिभ्यां सङ्केत्यमाने अक्षरे विलक्षणे मत्वा विशेषप्रकारेणोच्चारयन्ति। अन्योरक्षरयोः स्वरूपस्य उच्चारणस्य च विषये भ्रमो व्यापको वर्तत इति हेतोरस्मिन् निबन्धे विषयोऽयं विचार्यते।

## 'क्ष' इति लिप्या सङ्केत्यस्याऽक्षरस्य स्वरूपस्य विचारः

'क्ष' इति पृथग् लिपिं दृष्ट्वा केचन 'क्ष' इति पृथग् वर्णो वर्तत इति कथयन्ति। तान्त्रिका ललितासहस्रनामस्तोत्रादिषु 'क्ष' इत्यक्षरादिकानां नाम्नामन्ते उल्लेखात्, अकारादिक्षान्तवर्णमालामादाय 'अक्षमाला' इति व्यवहारस्य दर्शनाच्च 'क्ष' इत्यक्षरं नरसिंहन्यायेन भिन्नो वर्ण इति वदन्ति। 'क्ष' इत्येतादृशं लिपिविशेषं दृष्ट्वा केचन 'छ्य' इत्युच्चारयन्ति च। किन्तु ककारषकारयोः संयोगस्य प्रदर्शनायैव 'क्ष' इत्येतादृशी लिपिः प्राचीनकालात् प्रभृति प्रयुज्यमानेति ज्ञायते।

लघुसिद्धान्तकौमुदी-मध्यसिद्धान्तकौमुद्यादिपाठने विश्वनाथशास्त्रिप्रभाकरसदृशाः पण्डिताः 'प्राङ्क्षष्ठः' (प्राङ्+षष्ठः=प्राङ्क+षष्ठः=प्राङ्क्षष्ठः) इत्यादीनां प्रयोगाणां व्युत्पादने 'कषसंयोगे क्षः' इति लिपिपरिचायकं वाक्यं प्रयुञ्जते।[2] पाणिनीयव्याकरणेन च 'वक्ष्यति' (वक्ष्यति), 'वाक्षु' (वाक्षु) इत्यादौ कषसंयोगपर्यन्तायाः प्रक्रियाया एव प्रदर्शितत्वाच्चेयं वस्तुस्थितिः स्फुटमवगम्यते। अतः 'क्ष'

---

1. अस्मिन् निबन्धे प्रयुक्तानां सङ्क्षिप्तसङ्केतानां विवरणमधोनिर्दिष्टप्रकारकं वर्तते–
   अष्टा.=अष्टाध्यायी क्रै=क्रैस्ताब्दः
   टि.=टिप्पणी तृ.सं.=तृतीयं संस्करणम्
   द्र.=द्रष्टव्यः/-व्या/-व्यम्/व्यानि द्वि.सं.=द्वितीयं संस्कमरणम्
   पुनर्मु.=पुनर्मुद्रणम्/पुनर्मुद्रकः पृ.=पृष्ठसङ्ख्या/-सङ्ख्ये/सङ्ख्याः
   प्र.सं.=प्रथमं संस्करणम् मा.वा.=माध्यन्दिनीय-वाजसनेयि-
   मा.वा.शु.य.वे.=माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदसंहिता या.शि.=याज्ञवल्क्यशिक्षा
   वै.=वैक्रमाब्दः श्लो.=श्लोकसङ्ख्या
   सम्.=सम्पादकः p.=Page [Page-number]
2. मध्यसिद्धान्तकौमुद्यां हल्सन्धिप्रकरणे 'ङ्णोः कुक् टुक् शरि' (अष्टा. 8/3/28) इति सूत्रस्य प्रभाकर्यां वृत्तौ।

इत्यक्षरं पृथग् वर्णो नाऽस्ति, संयुक्तमक्षरं (क्+ष्+अ=क्ष इति) वर्तत इत्यवगम्यते। एवं च शैवशाक्ततन्त्रादिषु तत्त्वविशेषसङ्केतार्थं स्वतन्त्रवर्णत्वेनेव 'क्ष' इत्यक्षरस्योपादानेऽपि तस्य स्वतन्त्रवर्णत्वं तु वैदिकवाङ्मये नास्त्येवेति बोध्यम्। प्राचीनासु गुप्तलिप्यादिलिपिषु कषभागयोः स्फुटत्वादप्येतदेव पुष्टं भवतीति स्मर्तव्यम्। गुप्तलिप्यादिलिपिषु 'क्ष' इत्यक्षरे कषयोः स्पष्टतया स्थितिः कौण्डिन्न्यायनशिक्षायाः प्रस्ताविकायां (पृ. आ) प्राचीनलिपिफलकोदाहरणेन स्पष्टीकृतोपलभ्यते। गुप्तशिलालेखफलकेष्वप्येतत् स्फुटं दृश्यते।

किन्तु केचन पण्डिताः 'कषसंयोगे क्षः' इति वर्णनं दृष्ट्वा ताम्रत्रपुमिश्रणेन यथा तृतीयो भिन्नो धातुः (कांस्यम्) उत्पद्यते तथैव कषयोः संयोगेनाऽपि तृतीयो भिन्नो वर्णः (क्ष इति) उत्पद्यत इति मन्यन्ते। अत एव केचन वैदिका अपि 'क्ष' इत्यक्षरमेकं वर्णं मत्वा तत्र संयोगस्य स्पष्टां स्थितिमस्वीकृत्य तत्र संयोगादिस्थस्य ककारस्य द्विरुक्तिः शुक्लयजुर्वेदस्य माध्यन्दिनीयशाखाया मन्त्राम्नायेऽपि नाऽस्तीति मन्यन्ते। तथा च 'कामधुक्क्षः' (माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेद-संहितायाम् 1/3) इत्यादिषु स्थलेषु हस्तलिखितेषु पुस्तकेषु मुद्रितेषु पुस्तकेषु च प्रायः 'कामधुक्षः' इत्याद्येव दृश्यते। तथापि 'क्षत्रङ् क्षत्रियाय' (मा.वा.शु.य.वे.10/4), 'संशितङ् क्षत्रम्' (मा.वा.शु.य.वे. 11/81), 'आधिपत्त्यङ् क्षत्रम्' (मा.वा.शु.य.वे. 14/24) इत्यादिषु स्थलेषु क्षत्रपदस्याऽऽदौ ककारस्य सत्त्वं स्वीकृत्य 'स्पर्शे परपञ्चमम्' इति शुक्लयजुर्वेदप्रातिशाख्यसूत्रेण (4/12) अन्वाख्यातो मकारस्य ङकारभावः सवैरेव स्वीकृतो दृश्यत इति हेतोर्माध्यन्दिनीयके मन्त्राम्नाये 'क्ष' इत्यक्षरं कषसंयोगरूपेणैव स्वीक्रियते, न स्वतन्त्रैकवर्णत्वेनेति तथ्यं पुष्टं भवति। ततश्च संयोगादौ स्थितस्य ककारस्य द्विरुक्तिरपि स्वीकार्यैव। तथापि मा.वा.शुक्लयजुर्वेदसम्पादकैः वल्लभरामशर्मदाऊजीभट्टेत्युपाह्वदीक्षितगणपतिशर्म-दौलतरामगौडप्रभृतिभिः 'कामधुक्षः' (मा.वा.शु.य.वे. 1/3) इत्यादौ ककारद्वित्वं मुद्रापितं न दृश्यते। तैरेव 'क्षत्त्रङ् क्षत्रियाय' (मा.वा.शु.य.वे. 10/4) इत्यादिषु स्थलेषु तु क्षेत्यत्र संयोगादौ ककारस्य स्थितिं स्वीकृत्य पूर्ववर्तिमकारस्य परपञ्चमभावेन ङकारताप्राप्तिं च स्वीकृत्य क्षत्त्रङ् क्षत्रियायेत्यादिकं मुद्रापितमिति तेषां कार्यं सुसङ्गतं नाऽस्तीति ज्ञायते। अमृतलालशास्त्रिणा तु 'कामधुक्षः' इत्यादिषु स्थलेक्षु ककारद्वित्वममुद्रापयताऽपि 'दीक्क्षायाः' (मा.वा.शु.य.वे. 14/24), 'अस्तुवत क्क्षत्रम्' (मा. वा.शु.य.वे. 14/29) इत्यादिषु स्थलेषु तु ककारद्वित्वं मुद्रापितमेव दृश्यते। 'भगवान् वेदः' इतिनामके ग्रन्थे सङ्गृहीतायां शुक्लयजुर्वेद-माध्यन्दिनीयसंहितायां तु 'कामधुक्क्षः' इत्यादिषु स्थलेषु सर्वत्र प्रातिशाख्यान्वाख्यानानुसारं ककारस्य द्वित्वं प्रदर्शितमेव वर्तते।

उक्तविधायां स्थितौ 'क्ष' इत्यक्षरं पृथग् वर्णो नास्ति, ककारषकारयोः संयुक्तं स्वरूपमेवाऽस्तीति सुस्पष्टं भवति। तस्योच्चारणं च 'क्ष' इति रूपेणैव कर्तव्यमित्यवगम्यते। याज्ञवल्क्यशिक्षाया व्याख्यात्रा अमरनाथशास्त्रिणाऽप्येवमेव प्रतिपादितं दृश्यते। तद् यथा–"क-षसंयोगे क्षः" इति तु लिप्यनुशासनेन क-षयोगात् 'क्ष' इत्याकारा लिपिः कर्तव्येति बोध्यते। न पुनर्वर्णान्तरबोधको विधिरयम्। अस्य शब्दानुशासनेऽदृष्टत्वात्। श्रुतिवैलक्षण्यं तु स्वाभाविकं न वर्णान्तरप्रयुक्तमिति दिक्। इति (या.शि., टि., पृ. 148)। विभिन्नेषु शब्दकोषेष्वपि क्षत्रादिपदानि कषसंयोगक्रम एव मुद्रितानि दृश्यन्ते।

उपलभ्यमाने प्रसिद्धे प्राचीनतमे बहुपरिचिते अमरसिंहकृते नामलिङ्गानुशासने (अमरकोशे) च तृतीये काण्डे नानार्थवर्गे 'काकमत्स्यात्खगौ ध्वाङ्क्षौ कक्षौ तु तृणवीरुधौ' (श्लो. 219), 'पक्षः सहायेऽपि' (श्लो. 220), 'अक्षमिन्द्रिये' (श्लो. 222), 'प्रेक्षा नृत्येक्षणं प्रज्ञा भिक्षा सेवाऽर्थना भृतिः' (श्लो. 224), 'न्यक्षं कात्स्न्यनिकृष्टयोः। प्रत्यक्षेऽधिकृतेऽध्यक्षो रूक्षस्त्वप्रेम्ण्यचिक्कणे' (श्लो. 225) इत्युक्त्वा ध्वाङ्क्ष-कक्ष-पक्षा-ऽक्ष-प्रेक्षा-भिक्षा-न्यक्षा-ऽध्यक्ष-रूक्षशब्दान् षकारान्तानेव निर्धार्य शकारान्तशब्द- सकारान्तशब्दमध्ये षकारान्तशब्देष्वेव ते समावेशिताः सन्ति इत्यपि स्मर्तव्यम्। एवं च 'क्ष' इत्यस्य ककारषकारसंयोगवद्वर्णचिह्नत्वात् तत्रादौ वर्तमानस्य ककारस्य 'स्वारत् संयोगादिर्द्विरुच्यते सर्वत्र' (4/101) इति शुक्लयजुर्वेदप्रातिशाख्यसूत्रेणाऽन्वाख्याता द्विरुक्तिरपि माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदे भवत्येवेति बोध्यम्।

**'ज्ञ' इति लिप्या सङ्केत्यस्याऽक्षरस्य स्वरूपस्य विचारः**

लोके जकारञकारयोः संयुक्तं स्वरूपं प्रदर्शयितुं 'ज्ञ' इति लिपिर्लिख्यते मुद्र्यते च। तादृशं लिपिविशेषं दृष्ट्वा प्रायः जना 'ग्यँ' इत्युच्चारयन्ति।[1] केचन वैदिका अपि तथैवोच्चारयन्ति। महाराष्ट्रभवा वैदिकाः 'द्न' इति, नैपालाश्च वैदिकाः प्रायेण 'न्य' इति उच्चारयन्ति। तथापि एते सर्वे उच्चारणप्रकारा अशास्त्रीया एवेति ज्ञायते। एतेषामशास्त्रीयत्वं 'राज्ञः' (राज्ञः), 'यज्ञः' (यज्ञः) इत्यादौ पाणिनीयव्याकरणेन जकारञकारसंयोगपर्यन्ताया एव प्रक्रियायाः प्रदर्शितत्वात् स्फुटमवगम्यते। सम्प्रदायप्रबोधिनीशिक्षाकारेणाऽपि एतेषामशास्त्रीयत्वं प्रतिपादितं दृश्यते।[2] वैयाकरणसिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन हलन्तपुँल्लिङ्गप्रकरणे 'राज्ञः' इति प्रयोगे 'जञोर्ज्ञः' इत्युल्लिखितं दृश्यते। तद् दृष्ट्वा युगलकिशोरपाठकमहोदयेन शुक्लयजुर्वेदप्रातिशाख्यटिप्पण्यां 'जकारञकारयोः संयोगे ताम्रत्रपुसंगोगन्यायेन वर्णान्तरोत्पत्तिर्भवति' इत्युक्तं दृश्यते।[3] किन्तु 'जञोर्ज्ञः' इति भट्टोजिलेखस्य लिपिपरिचायनपरत्वात्, वर्णान्तरत्वप्राप्तिपरत्वे च निर्मूलत्वेनाऽप्रमाणत्वाच्च युगलकिशोरपाठकोक्तिरनुप-पन्नाऽवगम्यते।[4]

---

1. The Pronunciation of Sanskrit, Suniti Kumar Chatterji, The Journal of the Linguistic Society of India, Calcutta, 1960, p. 78.
2. 'ज-ञोर्ज्ञ इति वर्णस्य प्रयोगो भिद्यते श्रुतौ।
   गौडाचार्या जञौ स्पष्टं विश्लिष्य ब्रुवते परम् ।।
   महाराष्ट्रा दन्तमूलपीडनाद् ग्न्यमिवाक्षरम्।
   ग्य-द्न्येत्यादिश्रुतिर्वेदसम्प्रदाये न विद्यते ।।' इति सम्प्रदायप्रबोधिन्यां शिक्षायाम्, श्लो. 103-104।
3. 'यज्ञ इत्यत्र जगञाः। अत्र चवर्गतृतीयो जकारः तस्य सङ्ख्यासवर्णो गकारसमावेशः। वर्णक्रमे यकार-जकार-पूर्ववर्ग (र्ण?) समसङ्ख्यसवर्णयमगकार-ञकाराः। अत्र जकार-यमगकार-ञकारसंयोगे स्थानकरणपरित्यागेन वर्णान्तरोत्पत्तिः, यथा ताम्रत्रपुसंयोगे कांस्यस्योत्पत्तिरेवम्।' इति शुक्लयजुर्वेदप्रातिशाख्यस्य कीर्तिप्रकाशटिप्पण्याम् (वाराणसी 1888 क्रै., पृ. 303)।
4. याज्ञवल्क्यशिक्षाया व्याख्यात्रा अमरनाथशास्त्रिणा कीर्तिप्रकाशटिप्पणीकर्तुरुक्तिमुद्धृत्य सा निरस्ता दृश्यते (या.शि. , टि., पृ. 156)।

ओझोपनामकेन राजस्थानराजपण्डितेन मैथिलेन मधुसूदनशर्मणा 'पथ्या स्वस्तिः' इत्याख्ये ग्रन्थे 'यज्ञ इति वर्णागमत्त्वात् कङौ यमौ। ङकारे यमे तन्निबन्धनं जस्य कुत्वमिति यज्ञशब्दे गकारङकारञकाराः संयोगः।। आर्षोच्चारणप्रचारभूयस्त्वादिह यमसहितोच्चारणसंप्रदायप्रवृत्तिः। लोकमात्रप्रयुक्ते तु शब्दविशेषे तथोच्चारणसंप्रदायो नास्ति। याच्ञा'[1] इत्यादि यदुक्तं तदप्यनुपन्नमेव दृश्यते, गकारागमस्य जकारस्य कुत्वस्य चाऽप्रामाणिकत्वात्। अस्मिन् विषये बहुभिः पण्डितैर्भ्रान्त्याऽन्यथा प्रतिपादितमिति कौण्डिन्नयायनशिक्षाकारेण समालोचितं दृश्यते।[2] एवं च 'चज्ँञ' इत्यत्र जकारविशेषरूप एव यमवर्ण इति ज्ञेयम्। 'यज्ज्ँञ' इत्यादौ जकारस्य द्वित्वं तु 'यज्ज्ञ' इत्यादिरूपेण 'भगवान् वेदः' इतिनामके ग्रन्थे सङ्गृहीते मा.वा. शुक्लयजुर्वेदे सर्वत्र, अमृतलालशास्त्रिसम्पादिते मा.वा. शुक्लयजुर्वेदे तु प्राय उत्तरविंशतौ प्रदर्शितमुपलभ्यते। यैर्वल्लभरामशर्मादिभिः 'यज्ञपतिः' (मा.वा.शु.य.वे.1/2,9,12) इत्यादौ जकारद्वित्वं मुद्रापणेऽप्रदर्शितं तैरपि 'सञ्ज्ञानम्' (मा.वा.शु.य.वे.12/46,26/1),'सञ्ज्ञानाय' (मा.वा.शु. य.वे.30/9) इत्यत्र तु जकारञकारसंयोगं तत्रादौ जकारस्य स्थितिं च स्वीकृत्य पूर्ववर्तिनः 'सम्' इत्यस्य मकारस्य परपञ्चमभावप्राप्तिं च स्वीकृत्य 'सञ्ज्ञानम्' इत्यादि मुद्रापितमस्त्येव। यद्यपि मा.वा. शुक्लजयुर्वेदसंहितापुस्तकादिषु सचन्द्रबिन्दुका यमवर्णलिपिः प्रयुक्ता न दृश्यते तथाऽपि यमानां सानुनासिकत्वात्[3] तत्सङ्केतनार्थं यमवर्णमुद्रणेऽनुनासिकचिह्नयुतं (चन्द्रबिन्दुयुतं) वर्णं मुद्रयितुमावश्यकमनुभूयते। यथा–क्ँ–'रुक्क्ँमः' (मा.वा.शु.य.वे.12/1), ग्ँ–'अग्ग्ँनै' (मा.वा.शु.य.वे. 1/5), घ्ँ–:अग्घ्ँन्याः' (मा.वा.शु.य.वे.1/1), चँ–'आतनच्च्ँमि' (मा.वा.शु.य.वे.1/4), जँ–'यज्ज्ँञपतिः'[4] (मा.वा.शु.य.वे.1/2,9), तँ–'सपत्त्ँनक्षित् (मा.वा.शु.य.वे.1/29), थँ–'सक्थ्ँना' (मा.वा.शु.य.वे. 23/29), दँ–'औद्द्ँमन्' (मा.वा.शु.य.वे.13/53), धँ–'दद्ध्ँमः' (मा.वा.शु.य.वे.16/64), पँ–'पाप्प्ँमा' (मा.वा. शु.य.वे.6/35), भँ–'अगृब्भ्ँणन्' (मा.वा.शु.य.वे.10/1) इत्यादिषु स्थलेषु।

अतो 'ज्ञ' इति लिप्या सङ्केत्यमानमक्षरं जकारञकारयोः संयुक्तं स्वरूपमस्ति, तस्योच्चारणं च 'ज्ञ' इति रूपेणैव कर्तव्यमित्यवगम्यते। विभिन्नेषु शब्दकोशेष्वपि ज्ञानादिपदानि जञसंयोगक्रम एव मुद्रितानि दृश्यन्ते। उपलभ्यमाने प्रसिद्धे प्राचीनतमे बहुपरिचिते अमरसिंहकृते नामलिङ्गानुशासने (अमरकोशे) च तृतीये काण्डे नानार्थवर्गे 'पुंस्यात्मनि प्रवीणे च क्षेत्रज्ञो वाच्यलिङ्गकः। संज्ञा स्याच्चेतना नाम हस्ताद्यैश्चाऽर्थसूचना' (श्लो. 33) इत्युक्त्वा क्षेत्रज्ञ-सञ्ज्ञाशब्दौ ञकारान्तौ निर्धार्य जकारान्तशब्द-टकारान्तशब्दमध्ये ञकारान्तशब्दतया तौ निवेशितौ वर्तेते इत्यपि स्मर्तव्यम्। प्राचीनासु गुप्तलिप्यादिलिपिषु 'ज्ञ' इत्यक्षरे जञयोः स्पष्टतया स्थितिः कौण्डिन्यायनशिक्षायाः प्रस्ताविकायां

---

1. पथ्या स्वस्तिः, राजस्थान-प्राच्यविद्या-प्रतिष्ठानम्, जोधपुरम, 1969 क्रै, पृ. 8-9, द्र.-25-26।
2. द्र.–कौण्डिन्यायनशिक्षा, काष्ठमण्डपनगरम, 2049 वै., पृ. 241-242, 265-266।
3. (क) 'यमानुस्वारनासिक्यानां नासिके।' इति शुक्लयजुर्वेदप्रातिशाख्ये 1/74।
   (ख) 'नासिकामूलेन यमाः।' इति च शुक्लयजुर्वेदप्रातिशाख्ये 1/82।
4. 'भगवान् वेदः' इतिनामके ग्रन्थे सङ्गृहीते मा.वा.शुक्लयजुर्वेदेऽपि 'यज्ज्ञपतिः' इत्येवम्प्रकारेण मुद्रणं कृतं वर्तते। किन्तु यमरूपजकारस्य ञकारेण सहैक्यं कृत्वा यमरूपजकारवैशिष्ट्यं विलोप्य लेखनं मुद्रणं च समुचितं न दृश्यते।

(पृ. आ) प्राचीनलिपिफलकोदाहरणेन स्पष्टीकृतोपलभ्यते। गुप्तशिलालेखफलकेष्वप्येतत् स्फुटमेव दृश्यते। एवं च 'ज्ञ' इत्यस्य जकार-ञकारसंयोगवद्वर्णचिह्नत्वात् तत्रादौ वर्तमानस्य जकारस्य 'स्वरात् संयोगादिर्द्विरुच्यते सर्वत्र' (4/101) इति शुक्लयजुर्वेदप्रातिशाख्यसूत्रेणाऽन्वाख्याता द्विरुक्तिरपि माध्यन्दिनीय-वाजसनेयि-शुक्लयजुर्वेदे भवत्येवेति ज्ञेयम्।

**निष्कर्ष:**

उपर्युक्तेन विमर्शेनाऽधोलिखितानि तथ्यानि पुरत आगच्छन्ति-

'क्ष' इति लिप्या सङ्केत्यमानमक्षरं पृथग् विलक्षणो वर्णो नास्ति, 'क्+ष्+अ' इत्येतेषां वर्णानां संयुक्तं स्वरूपं वर्तते। अत: 'क्ष' इति लिपि: 'क्ष' इत्यस्याऽक्षरस्य प्रातिनिध्यं कुरुते।

'क्ष' इति लिपिं दृष्ट्वा तदुच्चारणं 'छ्य' इत्येवंरूपमकृत्वा 'क्ष' इत्येवंरूपं कर्तव्यम्।

मा.वा. शुक्लयजुर्वेदे उत्सर्गत: प्राप्तं द्वित्वं 'क्ष' इत्यक्षरेऽपि आदौ वर्तमानस्य ककारस्य भवति। यथा-'कामधुक्क्ष:' (कामधुक्क्ष:,1/3) इत्यादिषु स्थलेषु।

'ज्ञ' इति लिप्या सङ्केत्यमानमक्षरं पृथग् विलक्षणो वर्णो नास्ति, 'ज्+ञ्+अ' इत्येतेषां वर्णानां संयुक्तं स्वरूपं वर्तते। अत: 'ज्ञ' इति लिपि: 'ज्ञ' इत्यस्याऽक्षरस्य प्रातिनिध्यं कुरुते।

'ज्ञ' इति लिपिं दृष्ट्वा तदुच्चारणं 'ग्यँ' इत्येवंरूपं वा, 'द्न' इत्येवंरूपं वा, 'न्य' इत्येवंरूपं वाऽप्यकृत्वा 'ज्ञ' इत्येवंरूपमेव कर्तव्यम्।

मा.वा. शुक्लयजुर्वेदे उत्सर्गत: प्राप्तं द्वित्वं 'ज्ञ' इत्यक्षरेऽपि आदौ वर्तमानस्य जकारास्य भवति। यथा-'यज्ज्ञपति:' (यज्ज्ँञपति:, 1/2) इत्यादिषु स्थलेषु।

**सन्दर्भग्रन्था :**


1. मा.वा.शुक्लयजुर्वेदसंहिता, वल्लभरामशर्मसंशोधिता, जगदीश्वरयन्त्रालय:, मुम्बयी, 1948 वै., निर्णयसागरमुद्रणालय:, मुम्बयी, 1964 वै.।
2. मा.वा.शुक्लयजुर्वेदसंहिता, दाऊजीभट्टोपाह्व-दीक्षितगणपतिशर्मसंशोधिता, हितचिन्तक-मुद्रणालय:, रामघट्टम, काशी (वाराणसी), 1992 वै. (1936 क्रै.)।
3. मा.वा.शुक्लयजुर्वेदसंहिता, सम्पादक: दौलतरामगौड: (प्र.सं. 1944 क्रै,), चौखम्भाविद्याभवनम्, वाराणसी (गुटका) 2044 वै. (1987 क्रै.), पुनर्मु. 2002 क्रै.।
4. मा.वा.शुक्लयजुर्वेदसंहिता, अमृतलालशास्त्रिसंशोधिता, निर्णयसागरमुद्रणालय:, मुम्बयी, 1950 क्रै., द्वि. सं. (गुटका) 1983 क्रै., तृ. सं. 1987 क्रै., चौखम्भा ओरियण्टालिया, वाराणसी।
5. भगवान् वेद: इतिनामके ग्रन्थे मुद्रितो यजुर्वेद: (मा.वा. शुक्लयजुर्वेद:), सम्. स्वामिगङ्गेश्वरानन्द उदासीन:, रामानन्दमुद्रणालय:, नेपाली खपडा, वाराणसी, 2027 वै. (1970 क्रै.)।
6. शुक्लयजु:प्रातिशाख्यम्, उव्वटभाष्यसहितम्, सम्. युगलकिशोर (व्यास) पाठक:, काशी, 1883-1888 क्रै.।

7. शुक्लजयुर्वेदप्रातिशाख्यम्, उव्वटाऽनन्तभाष्यद्वयेन हिन्द्यनुवादेन च सहितम्, सम्. वीरेन्द्रकुमारवर्मा, ज्ञानप्रकाशन-प्रतिष्ठानम्, वाराणसी, 1975 क्रै. (पुनर्मु. चौखम्बा-संस्कृत-प्रतिष्ठानम्, दिल्ली, 1987 क्रै.)।

8. याज्ञवल्क्यशिक्षा, शिक्षावल्ल्याख्याय विवृत्या सहिता, अमरनाथशास्त्री दीक्षितः, काशी (प्र.सं. 1994 वै.) 2019 वै.।

9. सम्प्रदायप्रबोधिनी शिक्षा, सुबोधिन्याख्यया टुप्टीकया सचित्रेण हिन्दीभाषामयेन परिशिष्टेन च सहिता, रचयिता पं. गोपालचन्द्रमिश्रः, सद्धर्माऽनुसन्धानमन्दिरम्, ब्रह्मनालः, वाराणसी (प्रकाशनतिथिरनुल्लिखिता), पुनर्मु. चौखम्बा-विद्याभवनम्, वाराणसी, 1999 क्रै.।

10. कौण्डिन्न्यायनशिक्क्षा (कौण्डिन्न्यायनशिक्क्षा), रचयिता तथा व्याख्याता शिवराज आचार्यः कौण्डिन्न्यायनः, स्वाद्ध्यायशाला, काष्ठमण्डपनगरम्, नेपालदेशः, 2049 वै.।

11. पथ्या स्वस्तिः, मधुसूदनशर्मा ओझा, राजस्थान-प्राच्यविद्या-प्रतिष्ठानम्, जोधपुरम्, 1969 क्रै.।

12. मध्यसिद्धान्तकौमुदी, वरदराजकृता, सम्. विश्वनाथशास्त्री 'प्रभाकरः', मोतीलाल-बनारसीदासः, वाराणसी, 1956 क्रै.।

13. The Pronunciation of Sanskrit, Suniti Kumar Chatterji, The Journal of the Linguistic Society of India, Calcutta, 1960.

# भर्तृहरिनागेशयोः शब्दशक्तिसिद्धान्तसमीक्षा

**श्रीयीशनारायणद्विवेदी**

भर्तृहरिनागेशावेकसम्प्रदायीयावाचार्यौ, ततोऽपि द्वयोः शब्दशक्तिव्याख्याने भेदोऽवलोक्यते, कथम्मूलकोऽयम्भेद इति प्रसङ्गे शक्तिविषयकं व्याख्यानङ्क्रियते।

प्रस्तुतपत्रे भर्तृहरेर्वाक्यपदीयन्तथा च नागेशभट्टस्य "वैयाकरणसिद्धान्तलघुमञ्जूषा"– "परमलघुमञ्जूषा" इति मञ्जूषाद्वयी स्वीÑत्याध्ययनं विèkास्यते।

शक्लृ शक्तौ इत्यर्थकाद्धातोः "स्त्रियां क्तिन्" इति सूत्रेण क्तिनि सति शक्तिशब्दः निष्पद्यते। शक्यते बोèk: कर्तुमनया इति शक्तिः। अर्थात् यया बोèkो भवति सा शक्तिर्निगद्यते। शब्देषु काचन शक्तिर्वर्तमाना भवति, ययार्थबोèkो जायते। यदि शब्देषु शक्तिर्न स्यात्, तदानीं बहुÑतेऽपि प्रयत्ने शाब्दबोèkो न स्यात्।

अतएव वाक्यपदीयकारेणोक्तम्–

**विषयत्वमनापन्नैः शब्दैर्नार्थः प्रकाश्यते।**
**न सत्तयैव तेऽर्थानामगृहीताः प्रकाशकाः॥**[1]

अर्थात् विषयत्वं प्राप्ता एव शब्दा अर्थप्रकाशका भवन्ति, अर्थात् बोèkजनका भवन्ति। इतोऽपि महाभाष्ये "शब्द उपलब्èkोऽर्थं प्रत्यायति न सत्तामात्रेण"॥[2] अत्र तावद्विचिकित्सा जायते यत् का नाम शक्तिस्तदा वैयाकरणैः द्विèkा शक्तिः स्वीक्रियते। तत्रभवान् कौण्डभट्ट आह–"बोèkजनकता एव शक्तिः। नव्येषु नागेशः कथयति यत् वृत्तित्वं नाम–

"शाब्दबोèkहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्èkत्वम्"॥[3] "वाच्यवाचकभावरूपा शक्तिः। शक्तेः ग्राहकञ्च इतरेतराध्यासमूलकं तादात्म्यम्"॥[4] अत एव सर्वे सर्वार्थवाचका नैतद्विषये, अपितु कार्यकारणभावः कल्प्यते, तच्चेत्थम्–"तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः" इति।

---

1. वाक्यपदीयम् ब्रह्मकाण्डम्, 56
2. महाभाष्यम् 1/1/68
3. वैयाकरणसिद्धान्तमञ्जूषा, पृष्ठसंख्या-6
4. परमलघुमञ्जूषा

अत्र वैशिष्ट्यञ्च–स्वविषयकोद्बुद्धसंस्कारसमानाèkकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्èkेन बोध्यम्। "अत्र घटादिपदादुपस्थिताकाशादेः शाब्दविषयत्ववारणाय शाब्दबोèkे वृत्तिग्रहजन्योपस्थितिहेतुरिति सिद्धान्तः"[1]।

वस्तुतः वृत्तेर्बहुबिèkाः परिभाषा भिन्नदर्शनानुसाररिण्यस्तथाप्यत्र तासाममुल्लेख विèkाय व्याकरणशास्त्रमाèkृत्यैव चर्चिष्यते। न्यायशास्त्रे–"ईश्वरेच्छा शक्तिः", नव्यास्तु–"इच्छामात्रमेव शक्तिः। मीमांसकास्तु–शक्तिः पदार्थान्तरम्, सा च पदपदार्थयोर्वाच्यवाचकभावननियामिका, वैशिष्ट्याख्य-सम्बन्èkेनार्थनिष्ठा, सा शक्तिः प्रतियोगित्वसम्बन्èksन पदनिष्ठा प्राचीनवैयाकरणास्तु–

**इन्द्रियाणां स्व-स्व विषयेष्वनादिर्योग्यता यथा।**
**अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा॥**[2]

अनेन प्रकारेण शब्दानामर्थबोèkकारणं योग्यता, सैव शक्तिरित्यर्थः। एवम्भूताशक्तिः, यथा चक्षुरादीन्द्रियाणां रूपादिविषयकज्ञानजननेऽनादिर्योग्यता तथा शब्दानामर्थेऽनादिः सम्बन्èk एव। नागेशभट्टस्तु–"वाच्यवाचकभावापरपर्याया शक्तिः" इत्याह[3]। शक्तीनां त्रैविध्यं स्वीक्रियते दर्शनान्तरेषु–अभिèkालक्षणा-व्यञ्जनाभेदेन, किन्तु वैयाकरणनिकाये हरिः स्पष्टयति यद्– एकैव शक्तिः अभिèkाख्या, नापरा विद्यते। नागेशभट्टोऽपि शक्तिमेव स्वीकरोति प्रसिद्धाप्रसिद्धाभेदेन, लक्षणान्तु न मनुते, किन्तु स्वकीयम्मतम्प्रस्तौति तात्पर्यानुपपत्तित्वेन। व्याञ्जनान्तु स्वीकरोति। अतो हेतोः कस्मात्कारणादुभर्योर्भेदो दृश्यते, यतोह्युभयोरप्याचार्ययोः सम्प्रदायैकत्वन्दृश्यते। तत्रैतद्भेदस्य मूलङ्किमिति विचारयिष्यते।

भर्तृहरिमतेऽभिèkायाः स्वरूपम्–

**अर्थप्रत्यायकसर्वसाधनानां सार्थकता शब्दतत्त्वस्य स्थितावेव सम्भवति।**

अस्माद्धेतोवाचार्यैरुच्चरितशब्दद्वारको बोèkः स्वीÑतः, "उच्चारित एव प्रतयायक नानुच्चारित इति" एतादृशन्यायः प्रवर्तते। रहसि पुस्तकमीक्षमाणस्य स्वीयसूक्ष्मोच्चारणसत्त्वात् इति शब्दरत्ने प्रतिपादितम्।

लिप्यादीनामप्यर्थबोèkकताऽपि सूक्ष्मोच्चारणे एव निर्भरति। अभिनयेषु सङकेतेषु वस्तुतोऽर्थबोèkो जायते, शब्दोच्चारणाभावेऽपि अतस्तत्र शब्दापेक्षा न भवति तथा तत्रापि शब्दस्मृतिरेवावगन्तव्या। अतश्शब्देष्वर्थबोèkाय काचन स्वाभाविकी शक्तिर्निहिता भवति तथापि तत्र प्रतीतिविघातककारणानि वर्तमानानि भवन्ति येनार्थबोèkो न जायते, अस्तस्तत्रार्थानवबोèkस्य कारणम्प्रतीतिविघातकत्वमेव, न तु शब्देष्वर्थाभावः। महर्षिपतञ्जलिः प्रतीतिविघातककारणानि प्रस्तौति–

1. वैयाकरणसिद्धान्तलघुमञ्जूषा
2. वैयाकरणभूषणसारः कारिका सं. 37
3. वैयाकरणसिद्धान्तलघुमञ्जूषा पृ. सं. 28

"षड्भिः प्रकारैः सतां, भावानामनुपलब्èkर्भवति–अतिसन्निकर्षात्, अतिविप्रकर्षात् मूर्त्यन्तरव्यवèkनात्, तमसावृतत्वात्, इन्द्रियदौर्बल्यात्, अतिप्रमादादिति"। (महाभाष्यम्–"स्त्रियाम्" 4.13)

एतानि कारणानि सन्ति यस्मात् शब्दे सत्यप्यर्थे बोèkानुपपत्तिः। अतो हेतोरर्थज्ञानाय शक्तेर्ज्ञानमावश्यकम्भवति। भर्तृहरिस्तु एकमेवाभिèkाख्यां शक्तिं स्वीकरोति।

**श्रुतिमात्रेण यत्रास्य तदार्थ्यमवसीयते।**
**मुख्यं तमर्थं मन्यते गौणं यत्नोपपादितम्।**[1]

गौणं यत्नोपपादितं भवति। तदभिèkानशक्तिसद्भावेऽप्यप्रसिद्धत्वाद्यत्नेन प्रकरणादिना गौणत्वाध्यवसाय इत्यर्थः। एतन्निमित्तादिभिन्नं मुख्यमित्यभिèkीयते।

**शब्दैकत्वानेकत्वयोर्विषये भर्तृहरेर्विचारः–**

**एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।**
**निमित्तभेदादेकस्य सार्वार्थ्यं तस्य भिद्यते।।**[2]

अत्रैकशब्ददर्शनमनेकशब्ददर्शनं चेति द्वौ पक्षौ। तत्रापि पदपदार्थयोः सत्यत्वं पदवादिममतेन, असत्यत्वं वा वैयाकरणमतेनेति चत्वारः पक्षाः। प्रतिक्षिप्तमपि पक्षं व्यवहारार्थमङ्गीकरोत्येव टीकाकारः। यतः सर्वपार्षदमिदं हि व्याकरणं शास्त्रं तत्र चायं स्थित इत्यत्र पुनः पदपदार्थावङ्गीकरोति टीकाकारः।[3] तत्रैकशब्ददर्शने शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः। यतोहि शब्देनैकेनानेकार्थत्वं नावबुध्यते। "प्रत्यर्थं शब्दाभिनिवेशः", अतो हेतो अर्थानैक्यमालोच्य शब्दानामानैक्यमवलोक्यत एव। तस्मादर्थ–भेदाच्छब्दभेदोऽवसीयते। पुनरनेकशब्ददर्शनेऽपि शब्दैकस्मिन्नेव बह्वर्थबोèkकत्वमङ्गीकरोति भाष्यकारः। तस्तत्र "प्रत्यर्थं शब्दाभिनिवेशः" इत्यस्य व्यख्यानम्-अर्थमर्थं प्रति, अर्थावर्थौ प्रति, अर्थानर्थान् प्रति, एवं रीत्या क्रियते भाष्यÑता।

तस्मादनेकार्थशब्ददर्शनमिति पक्षोऽपि गम्यते। अत एव पुण्यराजः कथयति– तत्रैव चार्थोपचारो द्विèkा– "स्वरूपार्थत्वेन बाह्यार्थत्वेन च इति त्रयः पक्षाः। एवमन्यत्र तदेवमेतैस्त्रिभिः पक्षैश्चात्वरोऽपि पक्षा अभिहिता द्वादश सम्पद्यन्त इति बोद्धव्यम्। तत्रैकशब्ददर्शनसमाश्रयणेन तावद्गौणमुख्यविचारम्, "एकमाहुरनेकार्थम्" इत्यादिना करोति"। अनेकशब्दर्शनपक्षे तु एककालावच्छेदेन युगपदेव सर्वार्थप्रकाशकत्वापत्तिस्स्यात्।

यथा "गो" शब्दस्य बहवोऽप्यर्थाः सन्ति तस्मादेकालिकैव सर्वार्थप्रतीतिः कस्मान्न भवति।

1. वाक्यपदीयम् वाक्यकाण्डम् का. 278
2. तत्रैव का.सं. 250
3. तत्रैव पृ.सं. 328

**यौगपद्यमतिक्रम्य पर्याये व्यवतिष्ठते।**
**अर्थप्रकरणाभ्यां वा योगात् शब्दान्तरेण वा।।**[1]

एतस्माद्धेतोरेव एक एव गोशब्दो युगपत् सर्वार्थं प्रकाशयति। अभिèkया यदार्थ प्रकाश्यते तदा तत्र विनियोग आवश्यको भर्तृहरिमते–

**विनियोगादृते शब्दो न स्वार्थस्य प्रकाशकः।**
**अर्थाभिधानसम्बन्धमुक्तिद्वारं प्रचक्षते।।**[2]

इहैक एव शब्दो बह्वर्थः। स यदा वक्त्रा प्रतिनियत एवार्थे विनियुज्यते, तदा तमर्थं प्रतिपादयतीति दृष्टम्। अतः शब्दस्यार्थप्रतिपादनयोग्यता उक्तिद्वारैवेत्याहुः।

**यथा प्रणिहितं चक्षुर्दर्शनायोपकल्पते।**
**तथाऽभिसंहितः शब्दो भवत्यर्थस्य वाचकः।।**[3]

यथा सहजयैव योग्यतयाचक्षुरिन्द्रियमर्थविषये दर्शनमुपकल्पयद् दृष्टसम्बन्èkप्रणिèkानमपेक्षते, अन्यथा सर्वदा दर्शनोपजननप्रसङ्गात्; तथैव शब्दः स्वाभाविकेनैव सम्बन्èkेनार्थप्रत्यायकोऽप्यभिèkातृ-सम्बन्ध्यभिèkानमपेक्षत एव।[4] भर्तृहरिः अभिèkया सम्बन्èkं नियमयति–

**क्रिया व्यपेतः सम्बन्धो दृष्टः करणकर्मणोः।**
**अभिधानियमस्तस्मादभिधानाभिधेययोः ।।**

वाच्यवाचकभावाख्यः सम्बन्èkोऽभिèkया नियम्यते; यथा–कर्मकरणादीनि कारकाणि परस्परं लौहयष्टिवदसम्बद्धानि भवन्ति सत्यप्यसम्द्धयोः कर्मकरणयोरथवाऽसम्बद्धानां कारकाणां क्रियाद्वारकः सम्बन्èkो दृश्यते। "क्रियाव्यपेतः"–क्रियया व्यवहितः क्रियाद्वारकः सम्बन्èkो दृष्टः। तद्यथा–"रामेण बाणेन हतो बाली", अत्र हनन क्रियायां कर्मत्वकरणत्वाभ्यामन्वितयोर्बलिबाणयोः समानाfèkकरण्याख्यः परस्परं सम्बन्èkः। तस्मात् अभिèkानाभिèkेययोरपि कर्मकरणयोः सम्बन्èk वाच्यवाचकभावलक्षणेऽभिèkारूपः।

शब्दव्यापारो नियमः = नियम्तेऽनेनेति व्युत्पत्त्या नियमसाèkनं भवति, अभिèkानाभिèkेययोः वाच्यवाचक-भावलक्षणसम्बन्èkोऽभिèkाख्येन व्यापारेण नियम्यते। इत्यस्त्यभिमतस्वरूपमाचार्य- भर्तृहरिमतेऽभिèkायाः।

**नागेशाभिमताभिधास्वरूपम्–**

"तस्मात् पदपदार्थयोः सम्बन्èkन्तरमेव शक्तिः वाच्यवाचकभावापरपर्याया"[5] तस्मात् वाच्यवाचकभावव्यपदेश्यो निरुक्तेच्छादिभिन्नः पदपदार्थयोः सम्बन्èkः शक्तिः। तत्र वाचकत्वं वाच्यसत्वं

1. तत्रैव का. 257 पृ.सं. 330
2. तत्रैव का.सं. 399
3. तत्रैव का.सं. 400
4. तत्रैव पुण्यराजटीका पृ.सं. 463
5. परमलघुमञ्जूषा, पर. 19

च न क्रमेण बोèkजनकत्वरूपं बोèkविषत्वरूपञ्च, किन्त्वखण्डोपाèkस्वरूपं पदार्थान्तरम्।[1] स च वाच्यवाचकभावः शब्दार्थोभयनिष्ठ एव। तथाविèkशक्तेर्ज्ञापकम् "योऽयं शब्दः सोऽर्थः, योऽर्थः स शब्दः" एतादृशशक्तेर्ग्राहकमितरेतराध्यासमूलकं तादात्म्यं भवति।

"तद्ग्राहकमितरेतराध्यासमूलकं तादात्म्यम्"[2] तदेव सम्बन्èkः। उभयनिरूपिततादात्म्यवानुभव इत्यर्थपदयोर्व्यवहारात्। तादात्म्य पदनिष्ठशक्त्युपकारकत्वाच्छक्तिरिति व्यवहारः। सम्बन्èkविशेष-स्यैवाऽवास्तविकभेदविशिष्टारोपिता-भेदरूपस्य तादात्म्यस्य सम्बन्èkत्वाभावत् तस्य न शक्तित्वम्। न च तादात्म्यघटकभेदस्याभेदस्य वा सम्बन्èkत्वं कुत्रापि दृष्टम्। नीलो घट इत्यादौ सम्बन्èkपदार्थघटकसम्बन्èkभिन्नत्वाभावादभेदस्यापि सम्बन्èkत्वं नस्ति। ज्ञातस्यैव सङ्केतस्य शक्तिबोèkकत्वम्। तथा च पाणिन्यादिस्मार्तसङ्केतस्यैव वाचकतानियामकत्वम्, न त्वाèkुनिकस्य। आèkुनिकसङ्केतस्थले[3] द्वादशेऽह्नि क्रियमाणनामस्थले च लक्षणैव।[4]

तस्मात् शक्तिर्भिन्ना, सम्बन्èkो भिन्नः कथमिति चेत्? शक्तेरपि कार्यजनकत्वे सम्बन्èkस्यैव नियामकत्वात्। दीपादिगतप्रकाशकत्वशक्तावपि आलोकविषयसम्बन्èk सत्येव वस्तुप्रकाशकत्वं नान्यथेतिदृष्टत्वात्। तदुक्तम् हरिणा-

**उपकारः स यात्रास्ति धर्मस्तत्रानुगम्यते ।**
**शक्तीनामप्यसौ शक्तिर्गुणनामप्यसौ गुणः।।**[5]

तस्य च तादात्म्यस्य निरूपकत्वेन विवक्षितोऽर्थः शक्यः, आश्रयत्वेन विवक्षितः शब्दः शक्त इत्युच्यते। शब्दार्थयोस्तादात्म्यादेव "श्लोकमश्रृणोदथार्थं श्रणोति। "अर्थं वदति" इत्यादि-व्यवहारः। ओमित्येकाक्षरं ब्रह्म" इत्यादिषु शब्दार्थयोः सामानाèkकरण्येन प्रयोगो दृश्यते। तस्मान्नागेशस्य मते वाच्यवाचकभावाऽखण्डोपाèkस्वरूपैव शक्तिस्सवीक्रियते।[6]

सा च शक्तिस्त्रिèkा-रूढिर्योगो योगरूढिश्च। रूढिशक्तेस्वरूपम्- शास्त्रकल्पितावयवार्थभानाभावे समुदायार्थनिरूपिताशक्ती रूढ़िः[7] यथा-मणिनूपुरादौ। शब्दार्थकभौवादिकमणèkातोरौणादिके "इन्" प्रत्यये मणिरिति। एवमेव णु स्तुतौ" इति èkातोः नुवनं नूः इति, "पुर् अग्रगमने" इति èkातोः "इगुपèkज्ञाप्रीकिरः कः" इत्यनेन क प्रत्यये सति पुनः इति सिध्यति। नुवः पुरो नूपुरः। नहीमौ शब्दौ शब्दकर्तृरूपार्थं स्तुतिसम्बन्ध्यग्रगमनकर्तारं वा बोèkयतः किन्तु रत्नं भूषणविशेषं वा, एतस्माद्धेतो रूढिशक्तित्वमभ्युपगम्यत अनयोः।

1. वैयाकरणानमन्येषां च मतेन शब्दस्वरूप तच्छक्तिविचारः, पृ.सं. 25
2. परमलघुमञ्जूषा, पृ.सं. 19
3. लघुमञ्जूषा, पृ.सं. 25
4. तत्रैव, पृ.सं. 25
5. परमलघुमञ्जूषा, पृ.सं. 22
6. वैयाकरणसिद्धान्तमञ्जूषा, पृ.सं. 6
7. परमलघुमञ्जूषा, पृ.सं. 37

**योगशक्तेस्स्वरूपम्**–शास्त्रकल्पितावयवार्थनिरूपिता शक्तिर्योगः[1] यथा पाचकादौ। अत्र पच् èkातोरर्थः विक्लित्यनुकूलो व्यापारः, ण्वुल्प्रत्ययार्थ आश्रयः। एवञ्च विक्लित्यनुकूलव्यापाराश्रयः, पाचक इत्यस्यार्थः। एवम्भूतेषु यौगिकशब्देषु या शक्तिः सा शक्तिर्योगनाम्नाऽभिèkीयते।

भर्तृहर्यभिमतगौणशक्तिः–

**शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते।**
**स मुख्य इति विज्ञेयो रूपमात्रनिबन्धनः॥**[2]

हरिस्तु शक्तित्वेनैकमेवाभिèkाख्यां स्वीकरोति। नान्यां काञ्चन शक्तिम्। स वक्ति यद् द्विविèkोऽर्थो भवति– मुख्यार्थो गौणार्थश्च। शब्दस्य सर्वशक्तिमत्त्वं स्वीक्रियते। तदा सर्वशक्तिमता शब्देन सर्वविèkोऽप्यर्थः स्वस्मिन्नेवाभिभूयते। यथा च कारिकायाम्–

**सर्वशक्तेस्तु तस्यैव शब्दस्यानेकधर्मणः।**
**प्रसिद्धिभेदात् गौणत्वं मुख्यत्वं चोपवर्ण्यते॥**[3]

सर्वशक्तिमत्वं चानेकèkर्मण इत्यनेन व्याख्यातम्, वस्तुतस्तु– अनेकèkर्मत्वञ्च सर्वशक्तेरित्यनेन व्याख्यातमिति वक्तुमुचितम्, अनेकèkर्मत्वं हि सामान्यं, सर्वशक्तित्वं तु विशेषः। विशेषेण च सामान्यस्य व्याख्यानं भवति। सामान्यस्य हि विशेषरूपेणाख्यानं व्याख्यानमिति व्याख्यानपदात् प्रतीतेः। प्रसिद्धिभेदात् प्रसिद्धिविशेषाद् गोजातीये सातिशया गोशब्दस्य प्रसिद्धिः। वाहीके त्वीषदिति। तस्माद् प्रसिद्ध्यप्रसिद्धिÑतो गौणमुख्यभावः। तस्माहेतोरप्रसिद्ध्या शक्त्या गौणार्थे गम्यते, प्रसिद्धया च मुख्यार्थः। अन्या लक्षणाख्या काचनातिरिक्त शक्तिर्न विद्यते। कथमेकयैव शक्त्या गौणार्थोऽवबुध्यते इति प्रतिपादयति–

**यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते।**
**तथा स एव गोशब्दो वाहीकेऽपि व्यस्थितः॥**[4]

यथा गोत्वजात्यभिèkानपुरस्सरं येन गोशब्देन सस्नादिमान् पिण्डोऽभिèkीयते = अभिèkया वृत्त्या बोध्यते, तथा स एव गोशब्दस्तयैव वृत्त्या अर्थभेदेन स्वरूपभेदेऽप्यभिèkात्वेनैकया, वाहीकार्थाभिèkानेऽपि, व्यवस्थितः, व्यस्थात्रार्थभेदे शक्तिभेदे चापि शब्दैक्यरूपो नियमस्तां प्राप्त इति। एतेनात्रैकशब्ददर्शनम्, शक्तिस्वरूपभेदेऽप्यभिèkात्वेन–एकैव चाऽभिèkावृत्तिः। नास्ति लक्षणा नाम गौणी वा वृत्त्यन्तरम्। अभिèkायाः प्रसिद्ध्यप्रसिद्धिनिमित्तकश्च गौणमुख्यविभागरूपः शब्दोपचार इति सर्वं सूचितम्।

अतश्शब्दोपचारः प्रसिद्ध्यप्रसिद्धिनिमित्तकः प्रदर्शितः। एतस्मिन् शब्दोपचारे शब्दार्थसम्बन्धस्यानित्यत्वं स्यादित्याशङ्क्यार्थोपचारमाश्रित्याह–

---

1. तत्रैव, पृ.सं. 37
2. तत्रैव, पृ.सं. 331
3. तत्रैव का.सं. 253
4. तत्रैव, पृ.सं. 331

**गोत्वानुषङ्गो वाहीके निमित्तात् कैश्चिदिष्यते।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः॥**[1]

कैश्चिद्वादिभिः, निमित्तात् जाड्यादिगुणरूपसाèkरणèkर्मरूपं निमित्तमादाय वाहीके गोत्वानुसङ्गः=पदजन्यप्रतिपत्तिविशेष्यभूतोऽर्थः एव, विपर्यस्तम्=विपर्यासेन वैपरीत्येन=भिन्नतया प्रतीतम्, आक्षेपपदान्तरसमविभ्याहारादिनेति शेषः। शब्द= गोशब्दः स्वार्थे=स्वप्रवृत्तिनिमित्तभूतेऽर्थे गोत्वरूपेऽर्थे, व्यस्थितः=नियतः, मुख्ये गौणे चार्थे नियमेन प्रतीयते। पुण्यराजस्तु- अर्थः शब्दस्य द्विविèk:- स्वरूपं बाह्यश्च। तत्र निमित्तात् जाड्यादेर्गोत्वं वाहीकेऽनुषज्यते, शब्दस्तु गोत्वमेवाभिèkत्ते इति बाह्ययार्थोपचारः। इयांस्तु विशेषः- गौरित्यत्र मुख्यमेव गोत्वं, गौर्वाहीक इत्यत्र तूपचरितं सदेव वाच्यम्।

**तथा स्वरूपं शब्दानां सर्वार्थेष्वनुषज्यते।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः॥**[2]

यथा गोत्वं स्वतो जाड्ययादिगुणनिमित्तÑतारोपाद्वा गवि वाहीके च मुख्ये गौणे चार्थेऽनुषज्यते, तथा शब्दस्वरूपप्रवृत्तिनिमित्तत्वपक्षे गवादिशब्दानां स्वरूपं सर्वार्थेषु=मुख्येषु गौणेषु चार्थेषु, अनुषज्यते। = आध्यासिकेनानाध्यासिकेन वा तादात्म्येन सम्बध्यते। तत्रार्थमात्रम्= गवादिशब्दजन्यप्रतिपत्तिविशेष्यभूतोऽर्थ एव, विपर्यस्तं विपरीतम्, मुख्यार्थाद् भिन्नमिति यावत्। स्वरूपे तु शब्दस्वरूपात्मके प्रवृत्तिनिमित्ते, विशेषेण तु स्थितिः=वाच्यत्वसम्बन्èkेन गवादिशब्दस्य सत्ता, उभयत्रापि गौणे मुख्ये चार्थे स्थिरा=नियता, इति न शब्दार्थसम्बन्èkस्य नित्यताहानिः। अतस्सिद्ध्यसिद्धिभ्यामेव प्रसिदध्यप्रसिद्धिभ्यां तत्र गौणमुख्यविभागो बोद्धव्यः।

**अनेकार्थत्वमेकस्य यैः शब्दस्यानुगम्यते।**
**सिद्ध्यसिद्धिकृता तेषां गौणमुख्यप्रकल्पना॥**[3]

इदानीं गौणशब्दस्वरूपमाह–

**यस्त्वन्यस्य प्रयोगेण यत्नादिव नियुज्यते।**
**तमप्रसिद्धं मन्यन्ते गौणार्थाभिनिवेशिनम्॥**[4]

यत्नादिवेति। अर्थप्रकरणाभ्यामित्यर्थः प्रकारान्तरेण गौणमुख्यविभागमाह–

**स्वार्थे प्रवर्तमानस्य यस्यार्थं योऽवलम्ब्यते।**
**निमित्तं तत्र मुख्यं स्यात् निमित्ती गौण इष्यते॥**[5]

---

1. तत्रैव, पृ.सं. 333
2. तत्रैव, का.सं. 256
3. तत्रैव, का.सं. 263
4. तत्रैव, का.सं. 266
5. तत्रैव, का.सं. 267

यो वाहीके प्रवर्तमानः स्वार्थे सास्नादिमदिति वर्तमानस्य गोशब्दस्य सम्बन्िèkनमर्थं निमित्तत्वेनावलम्बते, तत्र विषये मुख्योऽर्थो निमित्तं स्यात्, गौणस्तु निमित्तीत्युच्यते। एतदुक्तं भवति– यत्राऽस्खलद्गतिशब्दतत्र मुख्योऽर्थः, स्खलद्गतित्वे तु गौणार्थतेति बोद्धव्यम्। एवम्प्रकारिकाङ्गौणाख्यां वृत्तिं स्वीकरोति, न तु कुत्राप्यनेन लक्षणा चर्च्यते।

**नोगशाभिमाता लक्षणा–**

नागेशभट्टेन तु लक्षणा स्पष्टत्वेन न स्वीक्रियते, किन्तु लक्षणाविषये स्वाभिमत्यम्प्रकाश्यते। एवञ्च "शक्ततावच्छेकारोप एव लक्षणा व्याकरणेऽभ्युपेया"। यथा उक्तस्थले "गङ्गायां घोषः" इत्यत्र गङ्गात्वस्य तीरे आरोपः। गङ्गात्वाभाववत्तीरं गङ्गात्वेन जानीयमिति आहार्यरूपो ग्राह्यः, न तु भ्रमरूपः, "पुंयोगादाख्यायाम्" इति सूत्रे भाष्र्ीता ध्वनितश्चायम्पन्थाः। लघुमञ्जूषायामपि "आरोपितशक्यतावच्छेदकरूपेण शक्त्यैव तत्पदवाच्यत्वेन प्रसिद्धान्यव्यक्तिबोèk व्यक्तिविशेषबोèk वा लक्षणेति व्यवहारः" इत्युक्त्या परमतसिद्धा लक्षणेति व्यवहार इति सूच्यते। स्वमते शक्तिरेव इत्यपि "शक्त्यैव तत्पद- वाच्यत्वे" इत्युक्त्या सूच्यते। तस्मादेव परमलघुमञ्जूषायां स वक्ति– वस्तुतस्तु तात्पर्यानुपपत्तिप्रतिसन्èkानमेव तद्बीजनम्।[1] अन्यथा– गङ्ग्यां घोषइत्यादौ घोषादिपदे एव मकरादिलक्षणापत्तिः तावताऽप्यन्वयानुपपत्तिपरिहारात्। अर्थात् घोषपदस्य मकररूपेऽर्थे लक्षणां विèkाय तत्र अन्वयानुपपत्तेः परिहारस्तु भविष्यत्येव किन्तु वक्तुरभीष्टार्थोपत्तिर्न भवति, अस्माद्धेतोस्तात्पर्यानुपपत्तिरेव लक्षणायाम्बीजमङ्गीकार्यम्। एवमेवान्वयानुपपत्तिममात्रस्वीकारे तु "काकेभ्यो दèk रक्ष्यताम्" इत्यत्रान्वयानुपपत्त्यभावात् लक्षणैव न स्यात्। तथा "गङ्गायां पापी गच्छति" इत्यादौ गङ्गापदस्य नरके लक्षणापत्तेश्च। अस्माकन्तु भूतपूर्वपापावच्छिन्नलक्षकत्वे न दोषः। "नक्षत्रन्दृष्ट्वा वाचं विसृजेद्" इत्यत्रान्वयसम्भवेऽपि तात्पर्यानुपपत्त्यैव लक्षाणास्वीकारात्। एकानुगमकस्वीकारेण निर्वाहंऽनेकानुगमकस्वीकारे गौरवाच्च। अतस्स भाष्यमाèkृत्य वक्ति– "सति तात्पर्ये सर्वे सर्वार्थवाचकाः" इति भाष्याल्लक्षणाया अभावात्। वृत्तिद्वयावच्छेदककल्पने गौरवात्। जघन्यवृत्तिकल्पनाया अन्यायत्वाच्च कथं तर्हि गङ्गादिपदात्तीरप्रत्ययः? भ्रान्तोऽसि, "सति तात्पर्ये सर्वे सर्वार्थवाचकाः" इति भाष्यमेव गृहाण। तथाहि शक्तिर्द्विविèkा– प्रसिद्धाऽप्रसिद्धा च। आमन्दबुद्धिवेद्यात्वं प्रसिद्धात्वम्। सहृदयहृदयमात्रवेद्यात्वमप्रसिद्धात्वम्। तत्र गङ्गादिपदानां प्रवाहादौ प्रसिद्धा शक्तिः, तीरादौ चाप्रासिद्धेति किमनुपपन्नम्? ननु सर्वे सवार्थवाचकाः इति चेद्ब्रूषे तर्हि घटपदात् पटप्रत्ययः किन्न स्यादिति चेन्न, "सति तात्पर्ये.... वाचकाः" इत्युक्तत्वात्तात्पर्याभावदिति गृहाण। तात्पर्यं चात्र ऐश्वरं देवतामहर्षिलोकवृद्धपरम्परातोऽस्मादादिभिर्लब्èkमिति सर्वं सुरूढम्"।[2] इथन्नगेशभट्टः स्वाभिमत्यम्प्रकाशयति। लक्षणा विषयेऽतस्तन्मते लक्षणाभाव एव।

**भर्तृहर्यभिमताव्यञ्जना**

"अर्कोऽस्तं गतः" इत्यादिवाक्यतो "मया सन्ध्योपासनं विèkेयम्" इत्यादिद्वितीयार्थसिद्धये वाक्ये पदादौ वा स्वीक्रियमाणा शब्दतदर्थयोर्द्योत्यद्योतकभावसम्बन्èkरूपा व्यङ्ग्यव्यङ्जकभावरूपा वा शक्तितो

---

1. परमलघुमञ्जूषा, पृ.सं. 50
2. तत्रैव, पृ.सं. 59

लक्षणातो वा भिन्ना व्यञ्जनानाम्नी वृत्तिः, इयं हि व्याकरणसम्प्रदाये प्राणभूता वर्तते। विनैनां व्याकरणदर्शनहृदयभूतस्फोटतत्त्वस्य प्रकाशनमेव न स्यात्। उक्तञ्च व्याडिना–

**शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते।**
**स्थितिभेदे निमित्तत्वं वैकृतं प्रतिपपद्यते।।**

आचार्यभर्तृहरिः प्रतिपादयति–

**ग्राह्यग्रहणयोः सिद्धा योग्यता नियता यथा।**
**व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः।।**[1]
**"प्रत्येकं व्यञ्जका वर्णा भिन्ना वर्णवाक्यपदेषु ये"**[2]

आभ्यामुक्तिभ्यां वर्णगता वाऽस्तु नामेयं वृत्तिः, बोèkकगताऽप्यस्तीति कुत आम्नातमिति चेदुच्यते– "भूवादयो èkातवः" इति सूत्रभाष्यतः अथवा "उपसर्गाः क्रियायोगे" इति सूत्रतो वाऽस्याः शब्दवृत्तित्वस्यापि लाभः। तथाहि– "आद्ये क्रियाविशेषक उपसर्गः, पचतीति क्रिया गम्यते तां प्रत्युपसर्गो विशिनष्टि" इत्युक्तं भाष्ये। अत्रोद्योतकारेण गदितम्– "क्रियाविशेषक उपसर्ग इति–यथाऽन्वयव्यतिरेकाभ्यां प्रत्ययोऽर्थबोèkकः, तथा ताभ्यामेव क्रियागतविशेषद्योतक उपसर्गः, एवं रीत्या व्यञ्जनायाः स्वरूपं पूर्वैरपि प्रतिपादितम्, यथा "प्रत्येकं व्यञ्जका भिन्ना वर्णवाक्यपदेषु ये" "व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः" इति कारिकाद्वयेन व्यञ्जनायाः स्वरूपं प्रतिपादयति भर्तृहरिः। वस्तुतो भर्तृहरिः स्पष्टत्वेन तु व्यञ्जनां न स्वीकरोति, किन्तु तत्Ñतस्फोटव्याख्यानेन गम्यते। कथ्यते च परिभाषेन्दुशेखरे– "व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्" इति रीत्या व्याख्यानगम्या। यद्येवं स्यात् तर्हि वैयाकरणास्वीÑतं स्फोटत्वं न गम्येदतो हेतो र्व्यञ्जनाऽवश्यमेव स्वीकरोत्याचार्यहरिः।

## नागेशभट्टस्य मते व्यञ्जना

ननु व्यञ्जना कः पदार्थः? उच्यते– मुख्यार्थबाèkनिरपेक्षबोèkजनको मुख्यार्थसम्बद्धाऽसम्बद्धसाèkारणः प्रसिद्धाप्रसिद्धार्थविषयको वक्त्रादिवैशिष्ट्यज्ञान– प्रतिभाद्युद्बुद्धः संस्कारविशेषो व्यञ्जना।[3]

अतो नागेशः स्पष्टत्वेन व्यञ्जनां नामोद्देशपूर्वकत्वेन स्वीकरोति। "संस्कारविशेषो व्यञ्जना" इत्युक्तम्। संस्कारे विशेषश्च त्रिविèk उक्तः। तथाहि यथा लक्षणया मुख्यार्थबाèkग्रहपूर्वकमेव बोèkो जन्यते, तथाऽत्र न भवति, अपितु मुख्यार्थस्य बाèkो भवतु न वा भवतु, अनया तु बोèkः क्रियते एवेति वाक्यार्थबाèkनिरपेक्षबोèkजकत्वं संस्कारे प्रथमो विशेषः। लक्षणया तु मुख्यार्थसम्बद्धस्यैव अप्रसिद्धस्यैव वा बोèkः क्रियते, अनया तु स नियमो न परिपाल्यते इति मुख्यार्थसम्बद्धाऽसम्बद्धसाèkारणप्रसिद्धाऽप्रसिद्धार्थ–विषयकत्वमुक्तसंस्कारे द्वितीयो विशेषः। उक्तसंस्कारस्योद्बुद्धानुद्बुद्धत्वसाèkारण्ये सर्वत्र सर्वेषामनया

1. वाक्यपदीयं, का.सं. 96
2. तत्रैव, का.सं. 87
3. परमलघुमञ्जूषा, पृ.सं. 60

बोèk: कथम्? इत्यतिप्रसङ्गवारणाय वक्त्रादिवैशिष्ट्ययज्ञानस्यैतज्जन्यबोèk सहकारित्वं स्वीक्रियत इति, वैशिष्ट्यज्ञानप्रतिभाद्युद्बुद्धत्वमपि तत्र तृतीयो विशेष इति। अत एव निपातानां द्योतकत्वं स्फोटस्य व्यङ्ग्यता च हर्यादिभिरुक्ता। द्योतकत्वञ्च स्वसमभिव्याहृतपदनिष्ठशक्तिव्यञ्जकत्वमिति वैयाकरणानामप्येतत्स्वीकार आवश्यकः। एषा च शब्दतदर्थ-पदपदैकदेशवर्णरचनाचेष्टादिषु सर्वत्र, तथैवानुभवात्। वक्त्रादिवैशिष्ट्यज्ञानञ्च व्यङ्ग्यविशेषबोèk सहकारीति न सर्वत्र तदपेक्षेत्यन्यत्र विस्तरः। नैयायिकानपि खण्डयतियत्तुलक्षणयैव गतार्था सा इति, तन्न, लक्षणया मुख्यार्थबाèkपूर्वकलक्ष्यार्थबोèkकत्वात्,- मुख्यार्थसम्बद्धार्थस्यैव लक्षणया बोकत्वात् व्यञ्जनायाऽतथात्वेन तदनन्तर्भावाच्चेति दिक्।" एवं रीत्या स्पष्टत्वेन व्यञ्जनां स्वीकरोत्याचार्यः।

**अभिधाविषये द्वयोर्मूलम्**

वस्तुतस्तु अभिèkI सर्वैरेव स्वीक्रियते, विषयेऽस्मिन्नास्ति कश्चन मतभेदः, किन्तु वैयाकरणैः स्वनिकाये शक्तित्वेनैकेव शक्तिरभिèkIङ्गीक्रियते। आचार्यभर्तृहरिः प्रतिपादयति स्वकीये वाक्यपदीय इति ग्रन्थे–

**श्रुतिमात्रेण यत्रास्य तादर्थ्यमवसीयते।**
**मुख्यं तमर्थं मन्यन्ते गौणं यत्नोपपादितम्॥**

**शुद्धस्योच्चारणे स्वार्थः प्रसिद्धो यस्य गम्यते।**
**स मुख्य इति विज्ञेयः स्वरूपमात्रनिबन्धनः॥**

**यथा सास्नादिमान् पिण्डो गोशब्देनाभिधीयते।**
**तथा स एव गो शब्दः वाहीकेऽपि व्यस्थितः॥**

इत्यादिभिः कारिकाभिः स्पष्टयति- यदेकैव शक्तिरिति स्वीÑता, नान्याऽभिèkIतिरिक्ता लक्षणा, लक्ष्यार्थस्य बोèkस्तु कारणान्तरैरेव भवति। यथा गौरित्यस्यार्थोऽभिèkया सास्नादिमान् पिण्ड इति तथैव गोरित्यस्य वाहीकरूपार्थोऽपि अभिèkयैव किन्त्वप्रसिद्धिवशात्। व्यञ्जनां स्पष्टत्वेन तु न कथयति, ततोऽपि "व्यङ्ग्यव्यञ्जकभावेन तथैव स्फोटनादयोः" इति कारिकायां व्यञ्जनां स्वीकुरुते। यद्येवन्न स्यात्तदा तु स्फोटसिद्धान्तस्यैव सिद्धिर्न स्यात्। अतस्माद्धेतो भर्तृहरिः स्वातन्त्र्येण व्याख्यानङ्करोति, यतोहि तस्मात्पूर्ववर्ती पतञ्जलिराचार्यो वर्तते, स "द्विर्वचनेऽचि च" इत्यादिसूत्रेषु लक्षणाश्रयणेन व्याख्यानङ्करोति। तस्मात्प्रतीयते यत् स वाचां त्रैविध्यमेव स्वीकुरुते, न तु चातुर्विध्यं हरिणा किन्तु स्वोपज्ञवृत्तौ परापरभेदेन द्विèkIत्वं विहितं, तत्र विवादः। यादृशं रूपं कैय्यटादिभिः स्वीक्रियते न तादृशं हरिणा, यतोहि न तत्र "चत्वारि श्रृङ्गाः..... " "चत्वारि वाक्परिमिता पदानि...." इत्येतादृशभाष्यप्रेरितत्वं दृश्यते। अतो नात्र परप्रेरकताऽपितु मौलिकविचारा एव भर्तृहरेः।

**नागेशः-**

नागेशोऽपि "शाब्दबोèkहेतुपदार्थोपस्थित्यनुकूलपदपदार्थसम्बन्èkत्वम्" एवम्प्रकारेण मनुते। अतोऽभिèkIं तु शक्तित्वेन स्वीकरोत्येव तथा च तच्छक्तेस्त्रैविध्यं स्वीकरोति रूढि-योग-योगरूढिभेदेन, तथा च

भर्तृहरिर्न चर्चति। नागेश "आढ्ययसुभगस्थूलपलितनग्नान्èkप्रियेषु च्वर्थेष्वच्चौ Ñञः करणे ख्युन्" इति सूत्रमेव अत्र मूलत्वेन भाष्यÑतव्याख्यानमनुगम्य व्याख्याति। तथा च लक्षणायामपि "पुंयोगादाख्यायाम्" 4.148 इत्यत्र भाष्यकारोऽपि चतुèkऽरोप विषयां लक्षणां तात्स्थ्यताद्धर्म्यतत्सामीप्यतत्साहचर्यभेदेन व्याख्याति। अतो हेतोरेव नागेश आचार्याभिप्रायप्रकाशनार्थं लक्षणाविषये पूर्वाचार्यान् नैयायिकादीन् प्रखण्ड्य स्वाभिमत्यम्प्रकाशयति-तात्पर्यानुपपत्तिविषयकम्, किन्तु "सति तात्पर्ये सर्वे सवार्थवाचका:" इति भाष्याल्लक्षणाया अभाव इति जगाद। व्यञ्जनान्तु स्वीकुरुत एव। तथा च स्पष्टयति- "मध्यमा नादोऽर्थवाचकस्फोटात्मकशब्दव्यञ्जक:"। एवम्प्रकारेण नागेशः कण्ठरवेणैव व्यञ्जनां स्वीकुरुत इति।

अत्र निष्कर्षत्वेन वक्तुं शक्यते यत् अभिèkI सर्वसम्प्रदायीयैराचार्यैरेव स्वीक्रियते, तथा च नागेशहरिभ्याममपि स्वीक्रियते। भर्तृहरिरभिèkख्यामेकामेव वृत्तिमङ्गीकरोति नतु लक्षणाम् इति। नागेशस्त्वप्रसिद्धया लक्षणाङ्खण्डयन्नपि तद्विषये स्वाभिमत्यमपि प्रकाशयति तात्पर्यानुपपत्तिरूपम्, "काकेभ्यो दèk रक्ष्यताम्" इत्यादावुपपत्त्यर्थम्। व्यञ्जनान्तुभर्तृहरिः साक्षान्न कथयति किन्तु "व्यङ्ग्यव्यञ्जकभावेन" इत्याद्युक्तिभिः "तत्संकेतं ददात्येव। नागेशस्तु साक्षाल्लक्षणां न स्वीकुरुते कित्वप्रसिद्धांशक्तिमेव लक्षणां मनुते। मूलविषये तु भर्तृहरिः स्वातन्त्र्येण स्वविचारानुपस्थापयति। नागेशस्तु पाणिन्याद्याचार्याननुसृत्यैव तन्मूलकत्वेन व्याख्यात्येव, तथा च साहित्यागमग्रन्थैरपि प्रभावितो दृश्यते।

## प्राथमिकग्रन्थाः-


1. त्रिपाठी, आचार्यरामप्रसादः, शब्दशास्त्रीयविमर्शः, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः 1997

2. भर्तृहरिः, वाक्यपदीयवाक्यकाण्डम्, सम्पादकः, शर्म. पं. रघुनाथः, वाराणसी, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः, 1980

3. भट्ट, नागेशः, परमलघुमञ्जूषा, व्याख्याकारः, त्रिपाठी, डॉ. जयशङ्करलालः, वाराणसी, चौखम्भा कृष्णदास आकादमी, वि.सं. 2061

4. भट्ट, नागेशः, वैयाकरणसिद्धान्तलघुमञ्जूषा, सम्पादकः, त्रिपाठी, वाराणसी, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयः 1997

5. भट्ट, नागेशः, परमलघुमञ्जूषा, व्याख्याकारः, त्रिपाठी, डॉ. जयशङ्करलालः, वाराणसी, चौखम्भा कृष्णदास आकादमी, वि.सं. 2061

6. शुक्लः, डॉ. कालिकाप्रसादः, वैयाकरणानामन्येषां च मतेन शब्दस्वरूपतच्छक्तिविचारः, वाराणसी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, 1979

**द्वितीयकग्रन्थाः–**

1. भर्तृहरिः, वाक्यपदीयब्रह्मकाण्डम्, व्याख्याकारः, अवस्थी, डॉ. शिवशङ्करः, वाराणसी चौखम्भा विद्याभवनम्, 2006

2. मिश्रः, डॉ. हरिरामः, व्याकरणतन्त्रस्य काव्यशास्त्रस्य प्रभावः, दिल्ली, इस्टर्न बुक लिन्कर्स, 1994

3. शास्त्री, हरिदत्तः, शब्द फिलोसाफिकल कनसेप्सन ऑफ द वर्ड, इन संस्कृत लेटरेचर 3/4 आगरा 1956 पी.एच.डी.

# शिशुपालवधमहाकाव्ये धर्मशास्त्रानुमोदितं राजनीतितत्त्वम्

**श्रीरमेशकुमारमिश्रः**

पाणिनीयव्याकरणस्य 'राज् दीप्तौ' धातोः कनिन् प्रत्यये कृते सति राजन् शब्दो निष्पद्यते। यस्यार्थाः भवन्ति शासकः, पतिः, प्रभुः स्वामीत्यादयः। रघुवंशे राजाशब्दस्यार्थं कुर्वता कालिदासेनोक्तम्–"राजाप्रकृतिरञ्जनात्" राज्ञां नीतिः राजनीतिः। मनुस्मृतेस्सप्तमेऽध्याये राजधर्मप्रकरणं बहुप्रपञ्चितम्। तत्र राज्ञः सृष्टिः कथं जातेति विचारयन्नाह मनुः–

**अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात्।**
**रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः॥**

**इन्द्रानिलयमार्काणामग्नेश्च वरुणस्य च।**
**चन्द्रवित्तेशयोश्चैव मात्रानिर्हृत्य शाश्वतीः॥**

**यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः।**
**तस्मादभिभवत्येष सर्वभूतानि तेजसा॥**[1]

अर्थादिन्द्रादीनां नित्यांशैर्निर्मितोऽयं नृपः सर्वभूतानि अभिभवति। सोऽयं नृपो यदि बालकोऽपि स्यात्तदापि तस्य सम्मानं कर्तव्यमेव यतस्तु नृपशरीरे दैवीशक्तिस्तिष्ठतीत्युक्तम् स्मृतौ। तस्य च राज्ञो धर्मः (आचारविचारव्यवहारादयः) राजधर्म इत्युच्यते। यया नीत्या स प्रजां पालयति सैव नीतिः राजनीतिरित्युच्यते। तस्य राज्ञः प्रयोजनसिद्धये सर्वप्राणीनां रक्षितारं धर्मस्वरूपं पुत्रं ब्रह्मणो यत्केवलं तेजस्तेन निर्मितं न पाञ्चभौतिकं दण्डं ब्रह्मा पूर्वं सृष्टवानिति मनुना समुद्घोषितम्। तद्यथा–

**तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।**
**ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः॥**[2]

यदि राजा दण्डं नाचरिष्यत्तदा यज्ञेषु सर्वथा हविरनर्हः काकः पुरोडाशमखादिष्यत्। तथा कुक्कुरः पायसादि हविरलेक्ष्यत्। न कस्यचित्कुत्रचित्स्वाम्यभविष्यत्। ततो बलिना तद्ग्रहणाद् ब्राह्मणादिवर्णानां च मध्ये यदधरं शूद्रादि तदेवोत्तरं प्रधानं प्रावर्तिष्यत।

1 मनुस्मृतौ 7.3-5

2 मनुस्मृतौ 7.14

यतः सर्वोऽयं लोको दण्डेनैव नियमितः सन्मार्गेऽवतिष्ठते। स्वभावविशुद्धो हि मानुषः कष्टेन लभ्यते। तथा सर्वमिदं जगद्दण्डस्यैव भयादावश्यकभोजनादिरूपेऽपि भोगे समर्थं भवति। तदुक्तम्मनुना-

**सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।**
**दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते।।**[1]

स च दण्डः शास्त्रतः सम्यङ्निरूप्यापराधानुरूपेण देहधनादिषु धृतः सर्वाः प्रजाः सानुरागाः शास्ति। अविचार्य तु लोभादिना प्रयुक्तः सर्वाणि बाह्यार्थपुत्रादीनि नाशयति। यदि राजाऽलसो भूत्वा दण्डप्रणयनं न कुर्यात्तदा शूले कृत्वा मत्स्यानिव बलवन्तो दुर्बलानम् इति।

अतो दण्डस्तु राज्ञः प्रधानं साधनमस्ति येन स प्रजां शास्ति। राजशब्दोऽत्र क्षत्रियजातिवचनो नास्ति। किन्त्वभिषिक्तजनपदपुरपालयितृपुरुषवचनो वर्तते। तेनेदं सुव्यक्तं भवति यत् भगवान् श्रीकृष्णः यदुवंशे जातोऽपि राज्याभिषेकादिविधिना राजापदमलङ्कृतवान्। प्रकृतनिबन्धस्य विषयानुसारमत्र शिशुपालवधमहाकाव्यमनुसृत्य राजनीतितत्त्वविमर्शो विविच्यते।

यः खलु राजा भवति स किमपि निर्णयं कर्तुं स्वमन्त्रिमण्डलम् अन्याँश्च सहयोगिनृपानेकीकृत्य सभायां स्वकर्त्तव्यविषयकं विमर्शनं करोति। एतद्राजनीतिनियममनुपालयन् भगवान्श्रीकृष्णः शिशुपालवधार्थं देवर्षेर्नारदस्याग्रहं स्वीकृत्य पूर्वं विचारयति। वस्तुतः शिशुपालवधमहाकाव्यं विंशतिसर्गेषु निबद्धं महाकवि माघप्रणीतमस्ति। तत्र प्रथमे सर्गे श्रीकृष्णस्य द्वारकापुर्यां देवर्षेर्नारदस्यागमनं शिशुपालस्य पूर्वजन्मवृत्तान्तवर्णनम्। श्रीकृष्ण एव विष्णोरवतारभूत इति प्रकाशनं कृतमस्ति।

द्वितीये सर्गे भगवतः श्रीकृष्णस्योद्धवेन अग्रजेन बलरामेन मन्त्रिभिश्च सह नारदोक्तविषये मन्त्रणां कर्तुं मन्त्रणागृहे गत्वा तेषां मन्त्रणाविषयकं प्रकरणं सुवर्णितमस्ति। काञ्चिदपि समस्यां समाधातुम्मन्त्रिभिरन्यैश्च सहयोगिभिस्सह मन्त्रणां कृत्वैव राजा निर्णयः स्वीकुर्यादिति मनोरभिप्रायोऽत्र साक्षादवलोक्यते। राजनीतिविषये भगवतो मनोस्सिद्धान्ताः सर्वमान्याः सन्ति। मनुरेव प्रजानां प्रथमः शाशको बभूव। तस्मात्तेनोक्तं सिद्धान्तमेवादिमं सिद्धान्तमित्यस्माभिः सहर्षं स्वीक्रियते। मनुना प्रोक्तमपि-

**तैः सार्धं चिन्तयेन्नित्यं सामान्यं सन्धिविग्रहम्।**
**स्थानं समुदयं गुप्तिं लब्धप्रशमनानि च।।**

**तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक्।**
**समस्तानां च कार्येषु विदध्याद्धितमात्मनः।।**

**सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता।**
**मन्त्रयेत्परमं मन्त्रं राजा षाड्गुण्यसंयुतम्।।**[2]

---

1 मनुस्मृतौ 7.22

2 मनु. 7.56-58

अर्थाद्राजा सचिवैः सह सामान्यं मन्त्रेष्वगोपनीयं सन्धिविग्रहादि तन्निरूपयेत्। तथा तिष्ठत्यनेनेति स्थानं दण्डकोशपुरराष्ट्रात्मकं चतुर्विधं चिन्तयेत्। दण्ड्यतेऽनेनेति दण्डो हस्त्यश्वरथपदातयस्तेषां पोषणं रक्षणादि तच्चिन्त्यम्। कोशोऽर्थनिचयस्तस्यायव्ययादिः पुरस्य रक्षणादि राष्ट्रं देशस्तद्वासि-मनुष्यपशवादिधारणक्षमत्वादि चिन्तयेत्। तथा समुदयन्त्युत्पद्यन्तेऽस्मादर्था इति समुदयो धान्यहिरण्याद्युत्पत्तिस्थानं तन्निरूपयेत्। तथा गुप्तिं रक्षामात्मगतां राष्ट्रगतां च, स्वपरीक्षितमन्नाद्यमन्नात् ''परीक्षिताः स्त्रियश्चैव''[1] इत्यादिनाऽऽत्मरक्षणं ''राष्ट्रस्य सङ्ग्रहे नित्यम्।''[2] इत्यादिना राष्ट्ररक्षां च वक्ष्यति। लब्धस्य च धनस्य प्रशमनानि सत्पात्रे प्रतिपादनादीनि चिन्तयेत्। तथा च वक्ष्यति ''जित्वा सम्पूजयेद्देवान्''[3] इत्यादि।

तेषां सचिवानां रहसि निष्प्रतिपक्षतया हृदयगतभावज्ञानसम्भवात्प्रत्येकमभिप्रायं समस्तानामपि युगपदभिप्रायं बुद्ध्वा कार्ये यदात्मनो हितं तत्कुर्यात्। एषामेव सर्वेषां सचिवानां मध्यादन्यतमेन धार्मिकत्वादिना विशिष्टेन ब्राह्मणेन सह सन्धिविग्रहादिवक्ष्यमाणगुणषट्कोपेतं प्रकृष्टं मन्त्रं निरूपयेत्।

उपर्युक्तानां मनुप्रोक्तराजनीतिसिद्धान्तानां सम्यक्तया प्रतिपालनं कुर्वता भगवता श्रीकृष्णेन उद्धवादिभिस्सह मन्त्रणां विहितम्। शिशुपालवधप्रसङ्गे तदत्रातिविस्तृतेन वर्णनेन सह महाकविना माघेन प्रतिपादितम्। यतस्तु शत्रूणां विषये राजनीतिज्ञा एवं चिन्तयन्ति यत् हिताभिलाषिभिर्व्यक्तिभिर्वर्द्धमानं शत्रुं नोपेक्षणीयम्। यथा हि लोके व्याधिर्वृद्धिमवाप्य रुग्णं मारयत्येवमेव शत्रुरपि वृद्धिमवाप्य मारणे समर्थो भवति। अतो राजनीतिविदां कथनमनुसृत्योत्पद्यमानं शत्रुं यथोचिते समये एव शमयितुं प्रयत्नं करणीयम्। तदुक्तमपि-

**कृतापचारोऽपि परैरनाविष्क्रितविक्रियः।**
**असाध्यः कुरुते कोपं प्राप्ते काले गदो यथा॥**[4]

अर्थात् परैः शत्रुभिः कृतः अपचारोऽपकारः, अपथ्यं च यस्य सः, तथाप्यनाविष्कृत-विक्रियोऽन्तर्गुदविकारः। अत एवासाध्योऽप्रतिसमाधेयः सन् गदो यथा रोग इव। काले बलक्षयावसरे प्राप्ते सति कोपं कुरुते। प्रकुप्यतीत्यर्थः। तदुक्तम्-

**बहेदमित्रं स्कन्धेन यावत्कालविपर्ययः।**
**तमेव चागते काले भिन्द्याद्घटमिवाश्मना॥** इति मल्लिनाथः।

एवं विविधविचारचिन्तनानि समावलम्ब्य श्रीकृष्णः शिशुपालनामानं शत्रुं पराभवितुं समुद्यतोऽभवत्। राजनीतिविशारदेनोद्धवेन यदुक्तं तच्छ्रुत्वा भगवान् श्रीकृष्णः स्वासनादुत्थाय शिशुपालवधार्थं समुद्यतोऽभवत् इति वर्णयता कविना प्रोक्तम्-

1. मनु. 219
2. मनु. 7.113
3. मनु. 7.201
4. शिशु. 2.84

**इति विशकलितार्थामौद्धवीं वाचमेना-**
**मनुगतनयमार्गामर्गलां दुर्नयस्य।**
**जनितमुदमुदस्थादुच्चकैरुच्छ्रितोरः**
**स्थलनियतनिषण्णश्रीश्रुतां शुश्रुवान् सः।।**[1]

अर्थात् भगवान् श्रीकृष्णः राजनीतिमार्गानुसारिणीं दुर्नयस्य निवारयित्रीमर्गलारूपामुद्धवस्य मन्त्रणामाकर्ण्य आसनादुत्थितवान्।

एवं विधमनेके प्रसङ्गा अत्र प्रतिपादिताः सन्ति, येषां राजनीतिना सह साक्षात्सम्बन्धो दृश्यते। सर्वेषां तत्तत्प्रसङ्गानामुल्लेखोऽत्र लघुनिबन्धे नैव सम्भवस्तस्मादेकेनैवोदाहरणेन शिशुपालवधमहाकाव्ये धर्मशास्त्रानुमोदितं राजनीतितत्त्वमित्याख्यस्य निबन्धस्य लेखनमवसाययामि। इत्यलमतिविस्तरेण।

1. शिशु. 2.118

# ज्योतिषशास्त्रे रोगनिदानोपायाः

**श्रीरविन्द्रकुमारबरमोला**

भारतीयदर्शनसम्मतत्रिगुणात्मकप्रकृत्या निर्मितसम्पूर्णसंसारः सत्वरजतमोमयोस्ति, ज्योतिषास्त्रेष्वपि सूर्यादिग्रहाणां त्रिगुणेषु वर्गीकरणमस्ति, येषु ग्रहेषु सत्वगुणांशाधिक्यं भवति तेषाममृतमयरश्मयः, येषु रजोगुणांशाधिक्यं भवति तेषामुभयमिश्ररश्मयः एवं तमोगुणांशाधिक्यं येषु ग्रहेषु तेषां विषमयरश्मयः भवन्ति। येषु त्रिगुणानामल्पता भवन्ति ते हीनरश्मयः मन्यन्ते, ग्रहाणां शुभाशुभस्या विभाजनं रश्मिगुणानुरूपमेव भवति, अस्माकं सौरमण्डले ग्रहाणांगति-युति प्रभावेण तेषां रश्मयोऽपि परस्परमेलनंकुर्वन्ति, येन कारणेन गुणाः प्रभाविताः भवन्ति, रश्मिविश्लेषणस्य सिद्धान्त कथयति यत् प्रत्येकग्रहाणां रशिमषु स्थानाकालावसरे गुणेषुच ह्रास-वृद्धयः भवन्ति। ग्रहाः स्वकक्षाषु स्वगतिभ्यः यत्र-यत्र गमनं कुर्वन्ति तेषा रश्मयः भूण्डलस्योपरि तत्तत् प्रदेशे पतित्वा तन्निवासीनां स्वास्थ्यबुध्यादीनामुपरि शुभाशुभ प्रभावम् कुर्वन्ति। ग्रहाणां गतिस्थित्यादिविलक्षणतावशात् सः प्रभावः समस्तभूमण्डलं भिन्न-भिन्न प्रकारेण प्रभावयति। अत एव स्थानविशेषषु ग्रहरश्मयः वातावरणस्य निजविशिष्टताहेतु त्वात् तत्रोत्पन्न जातकः एवं तल्लक्षणे अन्यस्थानोत्पन्नजातकस्यापेक्षा भिन्न-भिन्न स्वभावाकृति एवं विलक्षणशरीरावयवयुक्तः भवति, येन कारणेन तस्य स्वासथ्य बुद्धिक्षमता च निश्चितरूपेण भिन्नता दृश्यते। उत्पत्तिकाले यस्य-यस्य ग्रहस्य प्रधानता भवति जातकस्य स्वभावोपि तद्-तद् प्रकारेण भवति।

वैदिक वाङ्मये कर्मणः त्रयः भेदाः मन्यन्ते। सञ्चितप्रारब्धक्रियमाणाश्च, मानवजीवनोत्पन्नाः ये रोगा भवन्ति ते त्रिविधपापकर्मोत्पन्नाः भवन्ति, अतएव ज्योतिशास्त्रस्यफलितस्कन्धे सञ्चितकर्मजन्यफलस्य विचार आधानकुण्डल्यां एवं जनमकुण्डल्यां निर्मितयोगमाध्यमेन भवति। प्रारब्धकर्मफलविचारः दशाऽन्तर्दशावशात् एवं क्रियमाणकर्मफलस्य विचारः गोचर एवं प्रश्नकुण्डल्या माध्यमेन च भवति। पापकर्मप्रभावेण मानवजीवनमवश्यमेव प्रभावितं भवति। सत्यमेव कथिमस्ति यत्-**''जन्मान्तरकृतं पापं व्याधिरूपेण जायते''**[1], अस्तु रोगस्यकारणं किम्? पूर्वमेवरोगज्ञानं कथं भवितुं शक्यते? केपोपायेन रोगस्यशमनं भवितुंशक्यते? इत्यादीनां विषयाणां ज्योतिषशास्त्रालोकेऽनुशील-नस्यैकौ लघुप्रयासः प्रस्तुतशोधपत्रेऽस्तीति।

**ज्योतिषशास्त्रे रोगविचारः**

ज्योतिषशास्त्रस्यानुसारेण रोगविचारः जन्मकुण्डल्यामथवा आधानमुण्डल्यां षष्ठभावेन षष्ठाधिपतिः अष्टमव्ययभावेसति, अस्यातिरिक्तं पापप्रभावयुक्तराशयः भावाश्च, नीचराश्यस्तंगतगृह निर्बललग्नेशश्च

1. प्रश्नमार्गः 13/19

